दैर्घ॑भ्यभिहितेत्यत्र मांसुर्यमायास्ये साप्तमिके तथा-यां मनीपांक्षौद्रेषु सहोदैर्घमरायवैराजर्षभेषु ससा-मैटते भ्यासे प्रत्यये सईत्रिकवृहति प्रवीयज्ञावृह-त्युकारलोप उपह्वगयंसुर्याधामैटत उतविष्णोश्च ज-निताधंश्यावाश्वे यकारःपरिष्टोभंत्ये त्वरिमछन्दे दाविज्ञीये याशब्दः सफेप्रियंदेवायां प्रथमतृतीययो·

---

र्घंभ्यभिहीत्यत्र* दैर्घश्रवसेभ्यभिहितमनसेत्यत्र उत्सन्नकमितिकंश-ब्द मकारलोपः *मांसुर्यमायास्ये साप्तमिके तवायाम्* तयाहंसोमायाप्नासप्तमिके द्विनिधनायास्ये पुरुहणिवन्नोनिचर-तिमाम् अत्रमाशब्द एकारसमुदाहरणम् । घृणातपंनमतिसुर्यपरइ-तिमाशब्दसुर्यशब्दयोः मकारलोपः *मनीपाक्षौद्रेषु सहोदैर्घम-रायवैराजर्षभेषु* श्रुधीहवामा योधाविमस्याचेतोमनीषामिति-अत्र मकारलोपः । क्षौद्रेषु सहोदैर्घमरायवैराजर्षभेषु *ससामैटतेऽ-भ्यासे प्रत्यये*अस्यमनायामैटते यथा सहस्रमामितिअभ्यासे प्रत्यये मकारलोपः ससाशब्द एव प्रत्यय इत्यर्थः*सईत्रिक-वृहति *त्रिकद्रुकाथा वृहविमसईममाद्रोतिइकारे मकारलोपः *प्रवी-यज्ञावृहति* यज्ञायज्ञावृहतिप्रवीशब्दे मकारलोपः *उकारलोपः* उकारलोपइदानी वक्ष्यते *उपह्वगयंसुर्याधामैटते* अस्यम-वापमैटते अगयंसुर्यं स्तोपह्वगिमितिइन्द्रउपेतिउकारलोपः *उतविष्णो-श्चजनिताधंश्यावाश्वे* सोमःपवतायां त्रैष्टुभे श्यावाश्वे जनिता उतेति उकारलोप.(वकारलोपः)*यकारः परिष्टोभत्येत्वरिमछन्दे-दाविज्ञीये* दाविद्युतत्यारुचेतियज्ञायज्ञीये परिष्टोभंत्याकृपेतियकार-लोपः *याशब्दः सफेनिपदेवाया प्रथमतृतीययोर्विकल्पयोः* आमोवाथा सके मिथं देवाना प्रथमतृतीययोर्विकल्पयोर्वा·

विंकल्पयोरकारःसनेमित्वायामदेवॱंश्रुध्यत्रैतष्कले-ष्वऽघायोर्वारे प्रथमें ऽघसःक्षुल्लकान्धीगवयो वृद्धा-दक्षरद्वैदन्वते प्रथमे ऽद्वयुसिमास्वक्षरन्नक्रवॱंस्त्वा-ष्ट्रयाधे ऽग्नयेद्वीय आकारस्तत्वाविप्रायामिहवद्वाम इकारः प्रसोमाश्वे व्यञ्जनमपरांगं बिरामे लुप्यते

---

शब्दलोपः मन्तृजाप्लुतोत्रलोपश्चेत्येतदुक्तंभवति*अकारः सने-मित्वायामदेवॱंश्रु-ध्यत्रैतष्कलेषु* गोमनाया सनेमित्वामस्मदेतिअ-देवमितिअयमकारोलुप्यते श्रु-ध्यत्रैतष्कलेषु *अघायोर्वारेप्रथ-मे* वारवतीये प्रथमे स्वासु निर्मत्यादघायोरिति अकारलोपः *अघसःक्षुल्लकाधीगवयोः* पुरोजितीवोअधस इति अकार-लोपः क्षुल्लककालेधाधीगवयोः*वृद्धादक्षरद्वैदन्वतेप्रथमे* ऋ हस-मान्नायमपमे वैदन्वते पवित्रे सोमो ऽक्षरदितिवृद्धात्सोमशब्दात्पर आकारलोपः *अद्वयुःसिमासु* सखासुशेवोअद्वयुरितिअकारलो-पः *अक्षरन्नक्रवॱंस्त्वाष्ट्रयाधे* सुतासोमाया विणिधने त्वाष्ट्री-साम्नि पवित्रवन्तो अक्षरन्नितिदेवासो अद्युवन्निति च सो-मशब्दात् वृद्धादकारलोपः । सोशब्दाच्च वृद्धादकारलोपः *अग्न-ये द्वीये* यज्ञायज्ञीये स्वासु यज्ञायज्ञावो अग्नय इति अकारलोपः *आकारस्तत्वाविमायामिहवद्वामे* तन्त्वाविमाया संत्वामृभ-सायव इति आकारलोपः इहवद्वामदेव्ये *इकारः प्रसोमा-श्वे* प्रसोमासोविपश्चित इति आश्वे वनानि महिषीइवेत्रि इका-रलोपः *व्यंजनमपरागं विरामे लुप्यते* व्यञ्जनमपराङ्ग पूर्वा-ङ्गमित्यर्थः । तद् विरामे लुप्यते । कानि पुनस्तानि व्यञ्जनानि । उच्यन्ते । अनुस्वारः । रेफः । स्वरभक्तिः । क्रमजं । स्पर्शश्च । स्पर्शे मत्यये एतेषा लोपः । एतेषा च अन्तः पादिकानामेतल्लु-

ऽभ्यासे च नोर्मिर्णोर्णसार्जुन क्रन्स एवामृताचार्के

---

क्षणं । कुतः ? प्रत्युदाहरणेषु अन्तः पदिकोदाहरणात् । तस्मा
देवमुदाहरणानि । अनुस्वारादीनि अनुस्वारस्य तावत् वा-
मदेव्ये यꣳहिष्ठोमत्मदंयस इति । तथा स्वꣳसोआयाꣳहाविष्कृ-
तेपवस्वमꣳहयद्वयिरितिरेफोदाहरण । वयमुत्वायाꣳतौभरे स्वा-
मिऽपवितारवद् । अत्रन्द्रमुवर्णमिति आर्भावः । प्रतिहारमा-
त्रस्याविरामे अत्राविरामत्वात् लोपः । तथा ऐडस्वरेमत्स्यपायिना-
या ह्रूपातेहृष्णइन्दुःह्रूपापदोवरेण्य इति च आर्भूतयोरेफ-
लोपः । स्वरभक्तेरुदाहरणम् । पुनानायाम्निर्णिधनायास्ययौ-
धाजययोः । अपोवमानो अर्षति आपृच्छ्यन्धरुणं वा ऽजय-
र्षमीति च वर्षशब्दस्वरभक्तिलोपः । क्रमजोदाहरण अवानेम-
तुष्टवेतिद्वशब्दक्रमजस्य दकारलोपः । तथा आत्वनाकृपारेनम-
र्षासोदित्सअभ्यासविषयेत्सशब्दे क्रमजस्य तकारस्य लोपः । स्प-
र्शाइसत्रोदाहरणानि । त्वꣳसुगोपान्दितम इत्यत्र आग्नेयसूक्ते
त्वंशब्दे द्वौ तकारौ पूर्वागत्वादेकस्य क्रमजत्वेवि द्वितीयस्पर्श-
प्रत्ययत्वात् तस्मात्क्रमजः स्पर्शोलुप्यते । तथा पारित्यꣳदर्यतꣳ-
हरिमिति यद्वाहिष्ठीयेर्येशब्देरेफः पराङ्गं, एकः क्रमजोयकारः
पूर्वाङ्ग । पूर्वाङ्गत्वात्तस्य लोपः । तथा पारिस्वानायाꣳहावि-
ष्कृतेषु मदेषु सर्वथा इति सर्वशब्दे रेफः पराङ्ग । एकः क्रम-
जो वकारः पूर्वाङ्गम् । पूर्वागत्वादेकस्य वकारस्य रेफलोपः
*अभ्यासे च* अभ्यासे च प्रत्यये लुप्यते । च शब्दात्पूर्वाङ्ग
अन्तः पदिकमिति यथा दीर्घतमसोऽर्के इन्द्रस्य सोमपवमानऊर्मि-
णेति प्रथमस्य रेफस्य विरामत्वाल्लोपः । उत्तरस्य अभ्या-
सनत्वपत्वात् । तथा अमाविमोमाया पर्जन्यः पिता महिषस्य

आन्कारोनुनासिकोवृद्धः सर्वत्रारेववैखानससंत-
निषु ॥ ५ ॥

---

पणिना ३ णिना ३ तथा अभिप्रियाणि पवस्वायां नामानि य-
ह्वो अधिषेषु वर्द्धत इति, अयं पूषायां च सोमः पुनानो अर्ष-
तीतिदीर्घत्वमसोर्के एव । *नोर्मयोर्णमार्जुनरूभ्यसएवामृताचा-
चार्के* । नेति प्रतिषेधः । पूर्वलक्षणप्राप्तानामपवादः । द्विर्घ-
पञ्चस्वायां मम्नायमन्तऊर्मय इति अभ्यासप्रत्ययस्यान्तःपादि-
कस्य रेफस्य लोपप्रतिषेधः । प्रसोमदेवायां सिन्धुर्नपिप्ये अ-
र्णसा आहर्यतो अर्जुन इति पौरुहन्मनेरेफस्याभ्यासप्रत्यय-
स्य रेफलोपप्रतिषेधः । प्रयोभे सव्ये विषये मत्त आश्विनीरिस-
न्न विश्वाधामानि विश्वचक्षऋभ्वस इति श्रैखण्डने परिप्रध-
न्वायां दीर्घत्वमसोर्के । एवामृता इति रेफस्य लोपः पूर्ववद्
*आन्कारोऽनुनासिकोवृद्धः सर्वत्र* आन्कारोवृद्धः सन् अनु-
नासिको भवति । रङ्गी भवतीत्यर्थः । यथा परिधीँऽरतिता-
भिरयन्नापौरुहन्मनद्वैगतपौधाजयदबृहद्वैगवन्तरथादिषु । *अरेव-
वैखानससन्तनिषु* एषु वृद्धोपि सन्ननुनासिको न भवति । रेव-
तनिधायामुभयोरपि रैवतयोः आयत्नावानित्यत्र पदगीत एव
भवति । वैखानसे अयमुतायां पदगीत एव भवति । इंद्रोमदायां
संतनिनि अस्माँऽइंद्रासानिति च पदगीतः त्रिष्वपि रङ्गोन भ-
वतीत्यर्थः ॥

इति उपाध्यायाजातशत्रुकृते पुष्पसूत्रभाष्ये तृतीयस्य पञ्चमी
कण्डिका समाप्ता ॥ ५ ॥

आउवाऽव्यवहितमाउभवति सर्वे पदान्त्यं च व्यं· जनं लुप्यते शाता२३उवाभवा सियो१२३४वाउग्रा· २३उवाशर्ममहो२३४वायूजा२३उवावाजेषुचो२३४वा· मघा३१उवा२३एवंजातीयान्यनाउभावोभृगएवतरे रे· तःइंघेने पुमनः सन्तनिन्वशिथयुः प्रवद्गागेव अं· घ्रयश्चान्तः पदिकोनाउ भवति सर्वत्र यथा मा· न्दी१२मा२३४दायतो३आउवा२३ श्रीणन्तो गोभिरु३ आउवा २३ मरुव न योनिंऽसोमसाम्नि सीदछये

*आउवाव्यवहितमाउभवति सर्वपदान्त्यं च व्यञ्जनं लुप्यते शा ३ ता ३३ उ ३ वा २३ भ २११ वा ४ सियो ३३ ३५ वा २ उ ३ श १ र्म २ महो २३३ ३४५ वा ३ यू १ जा २३ उ २ वा ३३ वाजेषु चो ३३३४५ वा ३ मघा ३३ उवा ३ एवं जातीयानि *आउवाऽव्यवहितस्यार्चिकस्य अंत्यः स्वर आउभवति । यच पदांतीयं व्यंजनं तस्य च लोपः । तयो· दाहरणम् । स्वारस्योवर्णे कृतानश्चित्र उपात्तस्वरवृत्तांत्ययोः । अनेन उकारात्मा सीवर्णे । उग्रऽशर्मेति च एतेषु लोपः । तथा काण्वरथंतरे मह्रोमदायां अच्छाकोशांमधिरति *अनाउभावोभृग· एवंतरे* अकारः प्रतिषेधे पूर्वलक्षणेन आउवाभावस्तस्य प्रतिषे· धः । महुन्वायां कण्वतरे हृतामसंतभृगवः *रेतः इंधेने* गो· रिस्रीते रेतोधा इति सामेभ्यः* पुमनः संतानिनि *इन्द्रोमदा· यां सत्राजेतु मनो इति आउभावप्रतिषेधः *ओशश्रयुः मवद्भा· गेव* मवद्भागेव सोअप्सपां अभिधेनवः पत्रमे दाधिश्रयुरिति आउभावप्रतिषेधः *ओंघ्रयभ्रांतः पदिकोनाउ भवति सर्वत्र· यथा मां ३ दी ३ मा २३३३ दा ३ याता ३३ आउवा ३२

ना २३५ हाथिनायाउवानाईमाउवा२३ सुनोतसौपर्ण ऊर्म्मिणावाम्रमेधातिथयो वर्णंसदस्यवमवद्दृक्षसामराजेषु स्पर्शानामलोपोयथा द्युम्नानिमानु २ पाणा ३ माउसहस्रिणा३ माऊवाजिह्निया२ माउयन्मधुमा त्सु२ वीरिया२माउतिरेभा३ नाऊघृवसाना३:पारिया३ सी३ निर्णिजा३ माउश्येनो नयो नी२. द्यार्सवा३. ता३ मा-

---

श्री २ णंतोगोभि २ रू २३ आउवा ऽ२३ मरूच आउवा ३३ ओष्ठपश्चात्पदिको नाउ भवाति सर्वत्र यथोदाहृतम् । सोमउपवायामग्रेस्त्रिणिधने श्रीणंत इति च पवमानस्य जिघ्नवायां संतनिनि हरिश्चंद्रामरुद्गण इत्यनाउभावः #नयोनिर्धंसोमसाम्नि सीदच्छयेना ३३३हा ३ यिना ३ या उवा ना इमा ३ उवा ३३# अथपर्द्दहसोमसाम्नि स्वाशु सीदच्छयेनोनयोनिमिति ओष्ठपश्चात्पादिकस्याउभावः #सुनोतसौपर्णे# विलम्बसौपर्णे अध्वर्योअद्रिभिरित्यस्यां सुनोतामधुमत्तममित्याउभावः #ऊर्म्मिणावाम्रमेधातिथयो:# अभिसोमायां वाम्रमेधातिथयोः उर्म्मिणेति आउभावः #वर्णसदस्यवमवद्दृक्षसामराजेषु स्पर्शानामलोपो यथा द्युम्नानि मानू३३पाणा२३मा ऊ२सहस्रिणा ३२ मा ३ उवाजिह्निया ३२ मा ३ उयन्मधुमा२त्सु ३२ वीरिया ३३ मा ३ ऊतिरेभा ३२ ना ३ ऊघृवानसानाः पा३रिया३२सी २३ निर्णिजा ३२मा ३ ऊश्येनोनयोनी ३ द्यार्तवाता ३२ मामदा ३३ दा ३ ऊ२ #ऊवाकरवर्णे पुनानेत्वस्यां स्वंनोकायां च त्रासदस्यवे पुरोजित्यां भरद्वाजस्ये ओभयास्यामुद्वद्वाजस्ये शिशुंजज्ञानायास्वामराजे अयाविनोवायां एवेषां साम्नामेवेषु तृतेषु यथासंख्येनोदाहरणानि #नातिष्टुप्त्रिष्टुमुद्धानि सोमो वाईरा २३१ जमनूरा-

सदा३द्दाउ नतिष्टुप्शिशुमुद्दतिसोमो वाविरा२२जम-
नूरा२२१जतिष्टा ३ उ रहस्ये च न सर्वमाउभवति व्यञ्जनं
च च न लुप्यते यथा वाजीयनित्यवत्सातीपंगसिमा-
सु यत्राउभावो व्यंजनलोपश्च तद्वक्ष्यामः स्वरान्तः
कण्ठ्यः सर्वत्र विष्णवे सहस्रिणामिति यण्वापत्ययो
रञ्जोरैवतयोर्ष्यमः कारश्च रैवते सिमासु सर्वमाऊभ-

---

२३१जतिष्टा ऊ* । तद्द्वन्द्वार्गेवे त्रिष्टुंजद्दानायाऽऽयामोविराजमनु-
राजतिष्टुविति स्पर्शस्य पकारस्य लोपः *रहस्ये च न सर्वमा-
उभवति व्यंजनं च न लुप्यते यथा वाजीयनित्यवत्सातीपङ्गसिमा-
सु* रहस्ये च आउभावोव्यञ्जनलोपश्च न भवति । ए-
ष उत्सर्गः । यथा स्वासु रायोवाजीये वस्वीरनुस्वराज्यमिति ।
तथा नित्यवत्सासु सप्तास्येभिर्ऋक्भिरिति प्रतिषेधः । अनीपंगे
सिमासु च सोमउत्वापत्रस्त्रवाजयोः एवमादीनि *यत्राउभावो-
व्यञ्जनलोपश्च तद्वक्ष्यामः* । रहस्ये यत्राउभावो भवति व्यञ्ज-
नलोपश्च तदुत्तरत्रोदाहरिष्यामः *स्वरांतः कण्ठ्यः सर्वत्र* य
था मंद्रयायातिथारयेतियाशब्दे आकारः कण्ठ्यः तस्याउभा-
वोभवति कः प्राप्ते एतदारभ्यते । अनुष्टभारर इति सन्निकर्षप्र-
तिषेधाः या ३ आउवेति प्राप्ते आउभावः । वचनान्तरौप्यसं-
.धिर्भवति रायाउवेतिभवति तस्मादत्राउभावोभवति *विष्णवे
सहस्रिणमिति यण्वापत्ययोः* सोमार्यतु विष्णव इति ।
आपत्यस्य सहस्रिणमिति च आउभाव्योव्यंजनलोपश्च *अंजो-
रैवतयोर्ष्यम* अंजोविरूपे रैवतर्षभे च तालव्यस्याऊभावः ।
अंजोविरूपेसमुद्रस्याधिविष्टपेमनीषिणः रैवतर्षभेयायिवयरीतिवया
आगहीति च *अःकारश्च रैवते* अःकारश्च उभवति तालव्ये

षत्यनृगन्ते छान्दसीषु दिशोवसोराणां घोनामृगं-
तेषु चाऽक्षारित्यस्य शब्दस्य रेफलोपः स्वरघोषप्र-

---

येन अःकारः वातोमद इति *सिमासु सर्वत्राउभवति *सोम-
उष्णापयस्त्वयोः सिमास्तु सर्वस्याउभावः *अनृगन्ते* सिमास्वे-
व एतयोरेव तृचयोः आउभावप्रतिषेधः *छांदसीषु दिशोव-
सोराणांघोनाम्* छांदसीषु सिमासु गातुमनुशंसिषोदिशः
पूर्वीणां पुरूवसोयः शविष्ठः शूराणां योमंहिष्ठोमघोनां एते-
ष्वाउभावोव्यंजनलोपश्च *ऋगन्तेषु च* छान्दसीष्वेव ऋगंतेषु
आउभावोव्यंजनलोपश्च मंहिष्ठवाजिनृजस इति प्रथमायां स-
नः स्पर्पादिति द्विप इति द्वितीयायां समर्येषु प्रवाह इति तृती-
यायाम् *अक्षारित्यस्य शब्दस्य रेफलोपः स्वरघोषवत्सु प्र-
त्ययेषु* अक्षारित्येतस्मिञ्छब्दे रेफस्य लोपः । सन्धौ स्व-
रप्रत्ययस्य घोषप्रत्ययस्य च । अत्र किं मात्रं आःकारोऽत्र-
मिति प्रकरणाश्चाउभावां प्रत्यये नित्यवत्सातीषंगासिमा-
स्विति अत्र च आकारमात्रस्याउभावोन विसर्जनीयस्य । कथं
गम्यते । येन विवृत्तिं करोति ततोऽवगम्यते न विसर्जनीयस्य
लोप इति । लोपे तुरीपसंधिर्भवति । तथासति अ-
साउ भवति । तस्मादलोपः । तत्र स्याद्विसर्जनीयरेफलो-
पार्थ इह पुनरारम्भो युक्तः—नित्यवत्सातीषंगासिमासु स्वरप्रत्य-
यस्य लोपः । व्यंजनप्रत्ययस्य उदाहरणानि । उत्तरे मानव
सोमोदुग्धाभिरक्षारिति प्रस्तावविषये हकारघोषे प्रत्यये रेफ-
लोपः । अन्येषु तु सामसु अघोषप्रत्ययत्वादलोपः *उपोक्तः
शब्दः स्त्वोत्वाऽहे* श्रुधीहवायां परायां मारे अस्मन्मघवः

स्सु प्रत्ययेषु ज्योक्तः शब्दस्त्वोत्वाॅंहे सकारलोपः श्रवस्तमः साह्वान्विश्वायाॅंसंॅहिते सुशास्तिभिरिलान्द्वितीयायां मानस्तरभिमाजमावर्त्तेथादौ लोपः पराग वा सुहस्तास्तावे ङीयस्य लोपः पराङ्ग वेंद्रा येन्द्वितिक्रौंचे वलोपः संधावुगतिर्विरते द्विय-कारसंयुक्ते विकृष्टे पूर्वोयकारः प्लुत आकारः संप-

---

ज्योक्त इति कः शब्दस्य त्वऽ हकारे प्रत्यये सकारलोपः *श्रवस्तमः साह्वान्विश्वायाॅंसंॅहिते* अदाभ्यः संॅहिते अग्निस्तुविश्रवस्तम इति सकारलोपः । *सुशास्तिभिरिलाद्द्वितीयायाम्* इलाद्द्वितीयाया ऊर्जोनपाज्जातवेदः सुशास्तिभिरिति सकारलोपः *मानस्तरभिमाजमावर्त्तेथादौ लोपः* जमदग्नेरभीवर्त्ते मानस्तरभीत्यत्र उद्गीथादौ सकारलोपः मानस्तरभिमातये मानोहाउवा इति आरभः *परागंवा* अथवा परागं भवति । यथा धीमहे स्ता इति *सुहस्ता स्तावे ङीयस्य लोपः* यज्ञायज्ञीये आजायुर्विद्वितीयायाम् । अक्षरसंसर्गे प्रस्तावे सुहस्ताता है सा ३ इति सकारलोपः *परागंवा* परागं वा सकारः ता ३ स्ता इति भवति । *इंद्रायेंद्वितिक्रौंचे वलोपः संधौ* इन्द्रायेंद्राया क्रौंचे संधौ वकारलोपः । इन्द्रायेन्द्रा २ अ ३ हो २ इतिगावि वान्तस्यामापद्यत इति गातिर्वकारोभवति तस्य वकारस्य मध्य इति लोपः संधौ गतिः । *उगतिर्विरते* विरामे उगतिरेव भवति *द्वियकारसंयुक्ते विकृष्टे पूर्वोयकारः प्लुत आकारः संपद्यते रयिॅंसोमश्र-वा ३ आ२ याय* यज्ञस्व देव आयुषमित्यत्र द्वितीयाद्रयिॅंसोमश्रवाय्यमिति पूर्वोयकारः प्लुत आकारः संपद्यते तदुदाहृतम् *यि-

घते रयिंथंसोमश्रवा १ आ २३ यांयिक्रौञ्चे निधन- स्त्वात्थायारमाना२३ श्रवा२३४ यि२३४यां याशब्दः कुण्डपाय्ये महेनायां च प्रणपात् कुण्डपाया२३या: सत्यश्रवसि वाप्य अवृद्धस्तोभात्पर इकार· सम्प- घते रायिथंसोमश्रवौ३होवा हाइयाम् ॥ ६ ॥

अनुस्वारः स्पर्शः स्ववर्गीये प्रत्यये रेफस्पर्शो- ष्मभिः संयुक्त एते शब्दास्त्रयोऽन्तः पदिकास्तोभव्य-

---

क्रौचे निधनत्वात्या ३ वा २२ माना २३ श्रवा२३३ यी २३३ या ३॥ अयंपूषाद्वितीयायां उत्तमे क्रौचे पूर्ववदाकारे प्राप्ते प्रति- षेधः निधनत्वात् । निधने हीपीस्याथंसर्वत्रेति प्रकृताभाव एव भवति ॥याशब्दः कुण्डपाय्ये महेनाया च प्रणपात् कुण्ड- पाया ३३ या ३ सत्यश्रवसिवाप्ये॥ आतूनाकूपारे कुण्डपाया इति द्विपकारसंयोगात् पूर्ववत् आकारे प्राप्ते याकार एव भवति । तथा महेनाया रायोवाजीये पूर्ववदाकारप्राप्तो यकारः ॥अवृद्धः स्तोभात्पर इकारः संपद्यते रा३यि थंसोमश्रवौ ३ होवाहा- इया२म्॥ एवस्त्वदेवद्वितीयायां भासे अवृद्धस्तोभात्परः द्विपका- रविकृष्टः पूर्वोपकार इकारमापद्यते ॥

इति उपाध्यायाजातशत्रुकृते पुष्पसूत्रभाष्ये तृतीयस्य षष्ठी कण्डिका समाप्ता ॥ ६ ॥

॥अनुस्वारः स्पर्शः स्ववर्गीये प्रत्यये रेफस्पर्शोष्म- भिः संयुक्तएते शब्दास्त्रयोऽन्तः पदिकाः स्तोभव्यव- हिताः सर्वत्रातिद्वियंते स्तोभाते विरते लोपः संधारलोपोव- र्हिषि वर्तुराणाः पिशङ्गमीशानक्रन्द्यद्यशथंससराथंसिथंहमथं

वहिताः सर्वत्रातिह्रियते स्तोभान्ते विरते लोपः
सन्धावलोपोवार्हिपि ततुराणाः पिशङ्गमीशानकृदघ-

---

इत्येवं जातीयानि* लोपालोपादनन्तरं अतिहारलक्षणं, तस्मादतिहारलक्षणं वर्णयिष्यते । अनुस्वारः स्पर्शः समानवर्गीये प्रत्यये पंचविंशतिस्पर्शाः समानवर्गा इत्यर्थः । रेफः स्पर्शोष्मभिः संयुक्तः स्पर्शोष्मप्रत्यय इत्यर्थः । ऊष्माणश्चत्वारः अन्तः पाद एते अनुस्वारस्पर्शरेफाः सन्तः स्तोभेन व्यवहिताः तेन स्तोभारंभेण सह सन्धीयन्ते, किन्तर्हि ? अतीत्यस्तोभं परेण स्पर्शेण ऊष्मणा वा सहैकीभवन्ति । यदा च स्तोभान्ते विरामो भवति तदैतेषां अनुस्वारस्पर्शरेफानां लोप एव भवति संधावलोपः । अतिहार एव भवतीत्यर्थः । उदाहरणानि । वार्हिपि प्रथमे पक्षे अत्र भक्त्यन्तत्वात् नित्यविरतत्वात् तथा त्रिमात्रमन्तरमिति । कथमत्रातिहार इति । उच्यते । एके तावद्ब्रुवते संहिताध्यायपक्षेणैतद्द्रष्टव्यम् । अस्माकमपि संहिताध्ययनलिङ्गानि दृश्यन्ते । भद्रंसुश्रेयमूर्जोमिति । तथाऽपां गर्भोमिनारिहोति । अहमन्नादोऽहमन्नाद इति एवमादीनि । तस्मात्संहिताध्ययनं दर्शयति । अनेन श्रुते प्रदर्शितेयनव । अन्यत्र यत्रैवं भवति तत्रातिहारो भवति । अपामिवेदूर्मयस्तर्तुराणाः मृज्यमानायां रथिविद्यंग उत्तरोक्षोरंध्रवानजितोः । ईशानकृत्नुआनोविश्वानृतीयायाङ्ग्यैते उद्गीथईशानकृदितितकारे ऋकारस्यामुत्तस्य रेफातिहारः । अयसंस यस्येमदायां अश्वे्द्रैदे सोमनाम्नि अनुस्वारस्यातिहारः । अयंसरांमि साकमश्वे अनुस्वारातिहारः । संहृदिर्षवेचायां आग्नीमरे । प्रस्तावो अद्रिमंहवमिति अनुस्वारस्यातिहारः । अत्रापि

शांससरांहमांहेत्येवंजातीयान्यतिहारप्राप्तं व्यञ्ज-
नं लुप्यते आनंशादेव्ये ज्योतींषि वृष न ददर्शिवा-
रे वर्पसोदर्शतेलादे व्यसः स्वारेपर्णे प्रशंसन्तिचि-
शीयांधीगवयोर्हिन्वन्तिविशीये मन्दानङ्गीर्भिर्जनित्रे
धर्मे दैर्घे चिदुःसिष्ठ इदवउक्थंशीये कर्मवत्सास्वार्ध-

---

तदेव पर्कव्याख्यानं । महत्वंसोमाग्न्याया दावसुनिधने । अ-
नुस्वारस्यातिहारः । इहापि तदेव पर्कव्याख्यानं ॥ एवजाती-
यान्यन्यान्यपि द्रष्टव्यानि *अतिहारप्राप्तं व्यंजनं लुप्यते*
पूर्वलक्षणेनातिहारप्राप्तस्यापवादो वक्ष्यमाणेषूदाहरणेषु *आनं
शादेव्ये* एदुमधोर्द्वितीयाया उदानंशशीति अनुस्वारस्यातिहार-
प्राप्तस्यापवादः *ज्योतींषि वृषन्ददर्शिवारे* वारवन्तीये तते-
मद्द्वितीयाया येनज्योतींष्यीति अनुस्वारलोपः । मत्युभद्दर्शा-
यतीतिरेफस्यातिहारलोपः । त्रिष्वपि उद्गीथविषयः *वर्पसोदर्श
तेलादे* त्वेषः सन्धुर्भूरिवर्पस इति इलादे रेफातिहारलोपः ।
तथा सदर्शतस्य वपुष इति रेफस्यैव *अपसः स्वारे
पर्णे* स्वारसौपर्णे कण्वानाया द्वितीयाया मंहिष्ठोमत्सदपस
इति अनुस्वारस्यातिहारलोपः *प्रशंसन्ति त्रिशीयाधीगव-
योः* त्रिशात्रिशोवाऽतिविमियत्र त्रिशोत्रिशीयाधीगवयोः प्र-
शंसन्ति प्रशस्तिभिरित्यनुस्वारातिहारलोपः *हिन्वन्ति त्रिशी-
ये* त्रिशोत्रिशीये हिन्वन्ति सूरमुस्रय इति प्रस्तावे अनुस्वा-
रातिहारलोपः *मन्दानगीर्भिर्जनित्रे* उत्तरे जनित्रे तयो
दस्मान्त्ययोः । आद्याया अनुस्वारस्य द्वितीयाया रेफस्याति-
हारलोपः । *धर्मेदैर्घे* त्वोसोमात्याया दैर्घश्रवसे ऋतस्यधर्म-
ण्विति रेफस्यातिहारलोपः *चिदु सिष्ठ*शिशुजज्ञानस्याया गो-

वणे सर्वं तदुकार्त्तयशे स्वरांतमेके विसर्जनीयान्तं वा-

विन्दुर्द्रप्सेति अनुस्वारस्यातिहारलोपः ॥ *इंदवउद्रुंशीये* आस्यांविशत्वेत्यायां अस्यामस्यइन्दवद इत्यनुस्वारस्याति-हारलोपः । अत्रापि पर्कण्याख्यानं उपशब्देन व्यर्पेण-त्वात् । *कर्मवत्मासु* त्रिकद्रुकाद्यायां निस्यवत्मासु सर्हम-माद्यदिकर्मेति रेफातिहारलोपः । इहापि पूर्ववदेव *आथ-र्वणे सर्व* आथर्वणे अनुस्वारः रेफः स्पर्शः अतिहारमाप्तः सर्वं लुप्यते परीतोपिमयायोदीर्घयज्ञागसन्तुवक्षूमेमन्तामादिषु । अत्र परीतोपापि अनुस्वारस्य पूर्वांगत्वात् लोपः । संधावलोप इति अयंचतासुतमिति एवं मासः । एवं माप्ते लोपः अनन्स्या-वचनासुतमिति एवं भवति सखायोद्दीरेफस्य विरामे लोपः सन्धावलोपः । आचार्यांजह्वायामिति माप्ते रेफलोपः । अत आ-वद्यजिह्वायामिति तथा यज्ञायसन्तिस्त्यत्र चोपकारे पूर्वाङ्ग-त्वोभान्ते विरामे लोपः सन्धावलोपः इति ज्योतिंषुवद्या-या इति माप्नोति । एवं माप्ते अनुस्वारस्य विरामे लोपः क्रि-यते । तथा ज्योतिस्सुवद्याया इति भवति । उद्वाऊहाअहोवा-सखायोदायिउद्वाईहाअहोवाआवद विरामे रेफस्य लोपः तथा आवदूग्जिह्वायामिति भवति संधावलोप इति । अलोपे तु आवपजिन्ह्वायामिति एवं मखूणेवाज्योतिस्समीमहाइमासे लो-पः । ज्योतिस्समीमहाभवति । एवंधुवंम ऽहिहलमध्ययनं दर्शयति । यथाऽऽये पर्के । तदुक्तं पर्के *तंदुकार्त्तयशेस्वरान्तमेके विस-र्जनीयान्तं वा* कार्त्तयशे पुरोजित्येतायां तन्द्रुरोपामति यथा-धीमहे तद्रूऊहोरोपामितिविसर्जनीयांतं वा तन्द्रुरोपामेत्येवं तथा-ऽति तंद्रुरोपामिति भवति । अ यज्ञज्ञञ्ञवत् । पवस्तम

स्वासु भेरयन्तुरंलोपः पूर्वाङ्गं वा कश्चित्पदान्तोलोपः। प्राप्तोऽतिह्वियते कश्चित्पदान्तः पूर्वांगं प्राप्तोऽपि ह्रियते वचनात्प्राक्स्तोभस्य स्वरान्तोविरामः स्तोभान्ते विरते लोपः सन्धावलोपो निष्ठाअधयद्दिमापाऽँ सदो-

---

कालेपे च यथाच क्रतुविन्तम इति च पदान्तभावोद्रष्टव्यः *स्वासु भेरे यन्तुरंलोपः* तंगृद्धयाद्वितीयायां स्वासु भोभरे अग्निमीडिष्वयन्तुरामीति अनुस्वारस्य अतिहारमाप्तस्य लोपः सन्धावपि अग्निमीडिष्वया ३ हायितुरा ३ इति *पूर्वाङ्गं वा* आनन्तर्यमन्यर्त्रा भवति । अग्निमीडिष्वयाऽहायितू३ रा ३ इति एवं पूर्वांगभावः *कश्चित्पदान्तोलोपः प्राप्तोऽतिह्रियते कश्चित्पदान्तः पूर्वांगं प्राप्तोऽतिह्रियते वचनात्प्राक्स्तोभस्य स्वरान्तोविरामः स्तोभान्ते विरते लोपः सन्धावलोपः* । अन्तःपदिकानामतिहार उक्तः इदानीं पदान्तीयानामुच्यते । कस्य चित्पदान्तीयस्य लोपमाप्तस्यातिहारः । अप्राप्तस्य वचनादुच्यते । कस्य चित्पूर्वाङ्गमाप्तस्य अनन्तरेण स्तोभेन आनन्तर्यमन्यो माप्ते वचनादतिहारः प्राक्स्तोभस्य विसर्जनीयस्य विसर्जनीयपदान्तीयस्य स्वरान्तो विरामोभवति । स्तोभान्ते च अतिहृतस्य विसर्जनीयस्य रेफीभूतस्य लोपः सन्धौ अन्तोपः अतिहारोभवतीत्यर्थः । निगदव्याख्यातमेतत्सूत्रम् । पुरस्योदाहरणानि *निष्ठाअचयद्दिमायान्सदोविशीयोरमेधयोः* अचयद्दिमायां सदोविशीयोरमेधयोः पूर्वे न तिष्ठति प्राक्स्तोभस्य स्वरान्तोविरामः ततोविसर्जनीयस्य सकारीभूतस्य स्तोभान्ते लोपः । सन्धौ अतिहारः । अस्य पूर्वाङ्गं प्राप्तस्य स्तोभेन सह आनन्तर्यात् सन्धौ प्राप्तेऽति-

विशीयोत्सेधयोः कुवित्स्वासु मार्गीयवेऽचिक्रदत्पवमानाभ्यर्षसीत्यत्रकवणतरे पुरमजीजनोहिदेव्ये मद्दुरितायेददानिदेव्य उपर्बुधोग्रे विवस्वद्देव्ये गिर्वणस्त्वयाभूपंति मानवे सत्पतिमिंद्रं विश्वायां लेये जंभे चत्वामिद्धीत्यत्र मयमाउवाव्यव-

---

हारः यथा देवाहोपिगच्छाहोति *कुवित्स्वासु मार्गीयवे* स्वासु मार्गीयवे कुवित्सस्य महिम्नञामिति तकारस्य लोपमासस्यातिहारः उवेकारयोरेकीभाव इत्यनेन *अचिक्रदत्पवमानाभ्यर्षसीत्यत्र कण्वतरे* । कण्वरथन्तरे पवमानाभ्यर्षसीत्यत्र वृषोअचिक्रददिति दकारस्य आउवाव्यवहितमितिलोपमासस्यातिहारः *पुरमजीजनो हि देव्ये* पर्युद्धितीयायां गोजीरायारंहमाणा पुरन्ध्येतिमकारस्य ओवौकारयोरेकीभावे लोपमासस्यातिहारलोपः *मद्दुरितायेददातिदेव्ये* वामदेव्ये कस्तमिन्द्रान्त्सायां विश्वावरेमद्दुरितेति विसर्जनीयस्य रेफीभूतस्य ओवौकारयोरेकीभावे लोपमासस्यातिहारः *उपर्बुधोग्रेविवस्वद्देव्ये* अत्रापि उपर्बुध इति रेफीभूतस्य ओवौकारयोरेकीभावे लोपमासस्यातिहारः *गिर्वणस्त्वयाभूपन्तिमानवे* त्वामिद्धाह्यन्त्यायां उत्तरे मानवे सुतेष्विन्द्रगिर्वण इति विसर्जनीयस्य रेफीभूतस्य ओवौकारयोरनन्तरस्वरनीचाद्ययोरिति लोपमासस्यातिहारः *सत्पतिमिन्द्रं विश्वायां लेये जंभे च त्वामिद्धीत्यत्र* इन्द्रंविश्वायां वाजानांसत्पतिमितिकालेयवार्कजम्भयोः तकारस्य ओवौकारयोरेफीभावे लोप इति लोपमासस्यातिहारः । वार्कजम्भे च त्वा दृत्रेष्विन्द्रसत्पतिमिति तकारस्य

हितं छिद्रमैधांजोरूपेष्वृतमाउवाव्यवहितं पार्श्व-
संताछिद्रमेधांजोरूपाग्नेस्त्रिणिधनेषु ॥ ७ ॥

शवसः संजये सरद्गौतमे निष्कृतॅऽहगसाम्नि-
घृषोअचिक्रायां वयुमयघ्नन्यवसायांकाक्षीवते ध्यम-

---

पूर्वाङ्गमात्रस्यानन्तरसन्धिमात्रस्यातिहारः *मद्यमाउवाव्यवहितं-
छिद्रमैधाओरूपेषु* आभृसोमाधायां पवन्ते मद्यंमदामिति
मद्शब्दस्यातिहारः । आउवाव्यवहितस्य अच्छिद्रमैधाओरूपे-
षु एतेषु च लोपमात्रस्यातिहारः । आउवा व्यवहितमाउभव-
तीति मकारस्य लोपमात्रस्यातिहारः । ओवौकारयोरनन्तराध्य-
योरिति । सर्वपादान्तं च व्यञ्जनं लुप्यते इत्यनेन *ऋत-
माउवा व्यवहितं पार्श्वसन्ताछिद्रमैधाओरूपाग्नेस्त्रिणिधनेषु*
राजादिवक्त्रं महिन्वान ऋतामिति च आउभावमात्र अति-
हारः गायत्रपार्श्वसन्तानि अछिद्रमैधातिधांजोवैरूपाग्नेस्त्रिणिधनेषु ।

इति उपाध्यायाजातशत्रुकृते पुष्पसूत्रभाष्ये तृतीयस्य
सप्तमी कण्डिका समाप्ता ॥ ७ ॥

*शवसः सञ्जये* आते अग्नाऽऽव्यायी उक्थेषु शवसस्पत इति
विसर्जनीयस्य सकारीभूतस्यातिहारः । अस्य पूर्वाङ्ग मात्रस्याति-
हारः अत्र च हीष्यादिषु निधनत्वादविरुद्धः सन्धिः *सरद्गौत
मे *मस्तुन्वानद्वितीयां गौतमे सरज्जार इति उवौकारयोरिति-
दकारस्य लोपमात्रस्यातिहारः *निष्कृतॅऽहगसाम्नि घृषो-
अचिक्रायाम्* मृज्यमानोऽस्यायां देवानां सोमपवमाननिष्कृत-
मिति षकारस्य पूर्वाङ्गं मात्रस्यातिहारः *वयुमयघ्नन्यवसाया
काक्षीवते* पवस्वदेवान्ययायां काक्षीवते उदस्वादेवयुमिति म-

मैपिरे मरुत्पवमानोरधीतमायांकूलीयसंतनिपभेषु दूराद्दंतीये प्रथमे रसं मार्गीयवे हयस्त्वᳪसोमासिशांमदे द्विᳪसपर्द्धितायां त्रितशृंगयो रूभयᳪस्वासु मैधातिथे संपवित्रायाᳪसामराजे तच्चज्जायथाद्विती-

कारस्यानुस्वारीभूतस्य ओवौकारयोरेकीभाव इति लोपप्राप्तस्यातिहारः *उभयमैधापरे* अभिगुत्नमैधिरे त्रिकांतं मध्यमिति मकारस्यानुस्वारीभूतस्य ओवौकारयोरितिलोपप्राप्तस्यातिहारः । सर्वं पदान्त्यं च व्यञ्जनं लुप्यत इत्यनेन । *मरुत्पवमानोरधीतमायां कूलीयमन्तनिपभेषु* पवमानोरधीतमायां हरिश्चन्द्रोमरुद्दिनिरोहितकूलीयसन्तनिपवमानर्षभेषु तकारस्य लोपप्राप्तस्यातिहारः आद्यन्तयोः ओवौकारयोरेकीभाव इति लोपः । मध्यमे आउत्तान्यत्राहितमिति लोपः । *दूराद्दन्तीये मध्यमे* स्वासु मध्यमे त्वावन्तीये सनोदूरादिति तकारस्य चकारीभूतस्य ओवौकारयोरनन्तरनीचाद्ययोरिति लोपप्राप्तस्यातिहारः *रसं मार्गीयवे* रसन्ते मित्रायां एकर्चे मार्गीयवे मकारस्यानुस्वारीभूतस्य ओवौकारयोरेकीभाव इतिलोपप्राप्तस्यातिहारः *हयस्त्वᳪसोमासिशांमदे* स्वंसोमाद्याद्याशांमदे । पवस्वमᳪहृद्रापिमिति मकारस्य ओवौकारयोरेकीभावे लोपप्राप्तस्यातिहारः *द्विᳪसपर्द्धितायां त्रितशृङ्गयोः* आजातृवित्स्याया अद्रिमिष्णांतीति गौरीवितगौशृङ्गयोः अद्रिमिष्णांतीति मकारस्य ओवौकारयोरेकीभाव इतिलोपप्राप्तस्यातिहारः *उभयं स्वासु मैधातिथे* स्वासु मैधातिथे अन्यायां यथᳪहिष्मुभयाविनांपति मकारस्य आउत्वाव्यवहितस्य लोपप्राप्तस्यातिहारः *संपवित्रायां सामराजे*

पायां बृहद्रथंतरयोर्यच्छन्दस्तत्रैव बृहतीतरे प्रत्यस्मै द्वितीयायां मधश्चिपीमायां च वत्सासूत्प्रशंसायां त्रिशोयज्ञीययो श्चित्तद्यायां वतीये महद्क्रान्त्वासिष्ठे रहस्ये च माभे मधुहत्यहिंस्वारेपर्यायातः

---

श्रुताम इद्वहन्नः समितिमकारस्य पूर्वाङ्गंभासस्यातिहारः *तयज्ञायथाद्वितीयायां बृहद्रथन्तरयोः* यज्ञायथाद्वितीयाया बृहद्रथन्तरयोस्तसेयश्च इतिदकारस्य ओवौकारयोरेकीभाव इतिलोपभासस्यातिहारः वन्तो ३ वा ३ तेयज्ञ इतिमंधरापिप्रतिषेधः *यच्छन्दस्तत्रैव बृहति* तत्रैव यज्ञायथाद्वितीयायामेव बृहति यज्जात यवजंत्वमितिप्रतीहारे तकारस्य जकारीभूतस्य तृतीयादित्यां ओहोवायामितिलोपभासस्यातिहारः *इतरे प्रत्यस्मै द्वितीयायाम्* प्रत्यस्मै द्वितीयायां रथन्तरे आईमितिमकारगीतमुदाहरणम् । मकारओवौकारयोरेकीभाव इति लोपभासस्यातिहारः । रओ३वा ३ एनामिति *अश्चिपीमाया च वत्सासु* त्रिककुकांस्यायां प्रत्यवत्सासु इंशब्दस्य पूर्ववल्लोपभासस्य मकारस्यातिहारः । अत्रापि पर्कव्याख्यानम् *उत्प्रशंसायां त्रिशीयज्ञीययोः* त्रिशोत्रिशायाया त्रिशोत्रिशीययज्ञायज्ञीययोः योदेवतात्युन्नतेति उच्छन्दे तकारस्य पूर्वाङ्गं भासस्यातिहारः *चित्तद्यायावन्तीये* तत्तेमद्रात्याया वारवन्तीये तद्यावित्दितितकारस्य ओवौकारयोरितिलोपभासस्यातिहारः *महद्क्रान्त्वासिष्ठे* अक्रान्त्याया वासिष्ठे महत्तःसोम इति तकारस्य तृतीयादित्यामौहोवाया चतुर्थस्थे च्छ्वः पदान्तः सर्वत्र भवतीति लोपभासस्यातिहारः *रहस्ये च माभेमबृहति* माभेमाया बृहति महचे दृष्णो इति

पार्श्वेमोपुत्त्वायां नप्त्योः परिमितायांपूर्कौर्णायन योर्ह्नीये चर्षणीयऔजिष्ठायां ज्योतिरौपगवे पव-मानोअजीजनायामर्वाङ्हिनलोपमेकेकावे विते श्रुति पुष्याहिकेशिनायामुभयतः प्रमोः शैखण्डिने हरि-

---

तकारस्य तृतीयाद्वितीयत्वपरत्वाल्लोपप्राप्तस्याभिहारः *अहि-स्त्वारे पर्णे* उभ्येदभिद्वितीयायां स्वारे सौपर्णे अहिचत्वन-इति मकारस्य आउत्वाभ्यवहितस्य लोपप्राप्तस्याभिहारः *पार्श्वे मोपु त्त्वायां* मोपुत्त्वायायां गायत्रपार्श्वे मोपुत्त्वाना-यत्र नेतिचकारस्यात्वाभ्यवहितस्य लोपप्राप्तस्याभिहारः *नप्त्योः परिमितायां पूर्कौर्णायनयोः* परिमितायां गौपूर्कौ-र्णायनयोर्नप्त्योरिति रेफस्याभिहारः गौपूर्कओनौकारयोरेकीभाव-इति लोपप्राप्तस्याभिहारः। कर्णायने पूर्वाङ्गप्राप्तस्याभिहारः *ह्नीये चर्षणीयऔजिष्ठायां* अगं पूर्षासायां यज्ञायज्ञीये यःपञ्चचर्ष-णीरिति पूर्वाङ्गप्राप्तस्य रेफस्याभिहारः *ज्योतिरौपगवे पवमा-नोअजीजनायां* उत्तरौपगवे ज्योतिर्वैश्वानरमितिरेफस्य पूर्वा-ङ्गे प्राप्तस्याभिहारः *अर्वाङ्हिनलोपमेके कावे* । अर्वाङ्यमि-र्यासायां कावे अर्वाङ्हिनचक्र इतिहकारयोरेकीभाव इतिलोप-प्राप्तस्य एकेऽभिहारं मन्यंते । ग्रन्थकारस्तु लोपमेव मन्यते *वि-वेश्रुतिपुष्याहिकेशिनायां* गौरीविते गायत्रिस्त्वायां कावेगरामु पमुच्छुतिचेति मकारस्य चकारीभूतस्य ओनौकारयोरेकीभाव इति लोपप्राप्तस्याभिहारः *उभयतः प्रमोः शैखण्डिने* प्रतआशिर-नाःशैखण्डिने । पर्यर्षन्ते पवमानस्य प्रमोयेमत इति च पूर्वा-ङ्गं प्राप्तस्य विसर्जनीयस्य उपध्मानीयभूतस्याभिहारः *ह-रिश्रीचशाकरर्षभे* । पवस्ववाजोचरयोः । शाकरर्षभे हरिश्चित्रे

र्वीचशाकेरर्पमे ऽभीकेविपः स्व सर्वत्र यथा स्वर्विदःशंकुनिसाहीये च स्वर्विदानामेधे नस्वेप्रत्यये सिष्ठत्रैशोकयोश्च सिष्ठत्रैशोकयोश्च ॥ ८ ॥

अदृव्द्धादिपदांतात्स्वरे परे यकारोऽव्यवधीयत

---

पृथिवीचेतिमकारस्य पूर्वांगप्राप्तस्यातिहारः । एवमादीनि दृष्ट्वा अन्यत्र प्रतिहार उच्यते *अभीकेविपः* प्रसोमासोविपश्चितइति अभीके पकारस्यातिहारः *स्वःसर्वत्र* स्वः शब्दे विसर्जनीयभूतस्य सर्वत्रातिहारः । यथा पवमानो अजीजनाया सर्श्हित ज्योतिर्विश्वस्ःस्वर्दशोमिति । अत्रप्राकृतोभस्य स्वरान्तोविराम इति स्तोभात्याकृस्वःशब्दे स्वरान्तोविरामः ततो निर्हृतस्य सतः स्तोभान्ते विरामे लोपः । सन्धाव्लोपः । इति सन्धावतिहारः *यथा स्वर्विदः शंकुनि साहीये च* यथा पवस्वमध्यमाया शकुसत्रासाहीययोः अस्य पीत्वास्वर्विद इति रेफस्य ओभैकारपोरेकीभावे लोपमाप्तस्यातिहारः तथा *स्वर्विदानामेधे* इन्द्रचाहास्वर्विद्इति पूर्ववत लोपमाप्तस्यातिहारः *नस्वे प्रत्यये*-स्वः शब्दोविसर्जनीयः स्वःशब्द एव प्रत्ययेनातिह्रियते तत्र्याख्यातंपोस्केचोत्तरइतिप्रतस्मिन्सूत्रे *सिष्ठत्रैशोकयोश्चसिष्ठत्रैशोकयोश्च* रेफस्यातिहारमाप्तस्य लोपः । धर्त्रायां वासिष्ठे स्वः सिषासन्निति त्रैशोके स्वःपत्रिर्यदीदृभइति ।

इति उपाध्यायाजातशत्रुकृते पुष्पसूत्रभाष्ये तृतीयस्य
अष्टमी काण्डका समाप्ता ॥ ८ ॥

अदृव्द्धादिपदान्तात्स्वरे परे यकारोऽव्यवधीयत उपदान्ताच्च

ष्ठाभिकंदार्केषु पृणक्तुमहामित्रस्वाष्ट्रीवितेषु येऽत्वा-
मृजति लौशशैखण्डिनयो रदर्शिश्रुध्ये सत्रेषु सप्त-
हे अन्तस्थपरे तुलोपो यथाकाष्ठासुनरस्वांकाष्ठासु

---

पदातीयाधिकारार्थम् । तथाद्धात्परौ यौ लुप्ताविसत्र ॐआवि-
विरते विलोप एवेति सर्वग्रहण अन्लोपः सर्विविरते लोप इति ।
उभयत्रचन किमर्थमिति अन्यतरवचने परिशेषादन्यतरसि-
द्धिरिति ? उच्यते । कार्यार्थं पुनरेव वचन । मधावलोप इत्युच्य-
ते । (मध्य लोपदर्शनात) । पर्यूंपु मधन्वेति पुरोजितिवत् । वि-
रते लोप इत्युच्यते । विरते व्यलोपदर्शनात् । कईवेदाययामा-
प्कारणिषन् शिश्रियधामा इति *नमतीनिवर्चे* स्वर्विदृपशाद्याया
मतीत्येक इति व्यवधानप्रतिषेधः । अवविरामे न भवतीत्यर्थः
*जठरेषुद्धस्कावत्रासिष्ठाभिकंदार्केषु* । धर्त्तात्याया भविष्यमाणो
जठरेष्वितिउद्रुद्धागिवकावत्रासिष्ठयोरभिकद्दीर्घागमतोर्केषु व्य-
वधानप्रतिषेधः । भविष्यमाणे इति विरामप्रतिषेधः *पृणक्तुमहा-
मित्रस्वाष्ट्रीवितेषु* अनाविमोमद्धाद्याया पृणाक्त्वति महात्वेनामि-
त्रस्वारसाम्नीत्वाष्ट्रीसाम्नोर्गौरीविते च व्यवधानप्रतिषेधः *येऽत्वा-
मृजति लौशशैखण्डिनयोः* मत आत्वाद्याया येत्वामृजत्यपीति-
लौशशैखण्डिनयोर्व्यवधानप्रतिषेधः *अदर्शिश्रुध्ये* मस्तुअदर्शी
तिश्रुध्ये व्यवधानप्रतिषेधः *सत्रेषु सप्तहे* स्वापद्धायाया सप्त-
हेत्व सत्रेष्विति व्यवधानप्रतिषेधः *अन्तस्थपरेतु लोपो यथा का-
ष्ठासु नस्त्वा २ काष्ठा २ सुआ ३र्वतः* द्वे अन्तस्थे यस्य सं-
योगस्य परतः सअन्तस्थपर एवशब्दःतस्मिन्नन्तस्थपरे व्यवधान-
प्रतिषेधः । तदुदाहृतम् । तथा एनाविश्वान्यर्यद्दीयनस्वारसैन्धु-
क्षितसाकमश्वादिषु च । अत्र च बाहूरुभाष्यकारेण अन्तस्थपरतु

आ २ र्वतः स्तोभव्यवहिते त्व लोपोऽव्यन्तस्थपरे यथा-
भीकपूक्तयोरैटते त्वभ्यासे प्रत्यये वृद्धात्परौय्वौ-
लुप्तौ तंत्वागिरः सुष्टुतयोवाजया २३ तिआजिघ्न-
गाइसूरैआ २३४ क्तूपूआएवंजातीयानि नभूम्यु-
घासंचारे स्वायुधोग्रेसिधूनां मरुतां धेनौ स्वास्वौ-

---

लोप इति व्यतस्यसंयोगपर इति व्याख्यानं कृतं, ऊहसमा-
म्नाये तथा दर्शनात। अस्मद्गुरवस्तु यथासूत्रमेव मन्यंते। सत्वा-
मूर्जसायव इति पवमादिमोसख्यर्थ (ऋ २ हो ३ पवमादिषु २
रे २ व १ तोर्ना २ ऋ २ हो ३ हा ३ ई १ इन्द्रा ३ अ १ स्वं
१ नत्वा २ सात्वा २ मूर्ज १ सा ३२३ इ १ अ १ वा ३ हा
इ३संघा २११ हा २ मू १ जं १ ति १ आ ३२ प १ वा ३
अत्रव्यतस्थपरः।) रेवतीदार्यरूप्युत्तवारवन्तीयादिषु *स्तोभव्यव-
हिते त्वलोपोऽव्यंतस्थपरे यथाभीकपूक्तयोः* स्तोभव्यवहिते सयोगे
व्यनस्थसंयोगपरेऽपि व्यवधान भवत्येव *ऐटते त्वभ्यासे प्रत्यये*
उद्यान्त्यापार्मैटतेऽभ्यासे प्रत्यये सनाविकान्पर्यैइत्यत्रव्यवधानलो-
पः *वृद्धात्परौय्वौलुप्तौ तंत्वागिरः सुष्टुतयोवा २ जया ३२३ ति
आजिघ्नगा ई २३ सू ३ रो ३ आ २३४ क्तू २ पू आ ३ एवं-
जातीयानि* वृद्धादिपदात्परादुपदात्परात्व्यवधानलोपः। तदु-
दाहृतम्। यथा परिताप्यायाया दधन्वाद्योनर्योभारित्वति कौत्स-
लबर्हिषर्दीर्घश्रवसाधीगवादिषु। तथा मरुत्युअदर्शीति वारवन्तीय-
वामदेव्ययोः *नभूम्युघासञ्चारे* उषायायामिदासञ्चारे दि-
विमद्भ्यादद्दशीव वृद्धात्परादपि न प्रतिषेधः *स्वायुधाग्रेसिधू-
नां मरुतां धेनौ* ज्योतिर्यज्ञायायां मरुतां धेनौ स्वायुधःसोनृभि-
रिति व्यवधानप्रतिषेधः *स्वास्वौऽयने च* औयने च स्वायु

शने च स्वश्वोनाकिष्टुद्रथायां प्रियासितयोर्मदेष्वत्र-स्येदिंद्रायाऽध्कलदासयोर्यज्ञाय सतु सर्वत्र बृहद्वा-रसप्रवैराजपदानिधनश्रुद्धीयवर्जं नदीषु प्रियः सुनायां यौधाजयद्गैगणव्रतरेषु धर्त्तायां कावचासिष्ठाभिक्रदेषु सुतेषु त्वया भूयायां माधुच्छन्दसमानवयो शुम्नीप्रमध्र हिष्टीये धनेष्वर्षासोमायाऽशाकलवार्शसत्तानिवर्ण-हरेषु ॥ ९ ॥

---

पूर्ववत्प्रतिषेधः । सू ३ चा ३ शुध्याः पवते २ दा ३ ई #स्व-श्वोनकिष्टुद्रथाया प्रियासितयोः #इममिन्द्राद्वितीयाया वसिष्ठप्रिया-सितयोः नःकिनस्त्वत्र इति न प्रतिषेधः #मदेष्वत्रस्येदिद्रायाश्ध्क-लदासयोः# इद्रमच्छात्याया पौष्कलदैवोदासयोः अस्येदिन्द्रो-मदेष्विति न प्रतिषेधः #यज्ञाय सन्तु सर्वत्र# यज्ञाय सन्त्विति सर्वसामसु दृद्धात्परादपि न प्रतिषेधः #बृहद्वासप्रवैराजपदनिधन-श्रुद्धीयवर्जम# एतेषु उत्सर्ग एव भवति लोप इत्यर्थः #नदीषुप्रियः सुनाया योधाजयद्गैगणव्रतरेषु# प्रसोमदेवात्याया योधाजयद्गैगत-कणवरथन्तरेषु नदीष्विति व्यवधानप्रतिषेधः #धर्त्तायां कावचासिष्ठा-भिक्रदेषु #धर्त्तायां कावचासिष्ठयोरभिक्रदेषु सिक्तपुषेनदीष्वेति व्यवधानलोपः #सुतेषु त्वया भूयाया माधुच्छन्दसमानवयोः# त्वामिदाव्याया माधुच्छन्दस उत्तरयानवयोः सुताश्चिन्द्रगीतिव्यव-धानम् # द्युम्नीप्रमध्रःहिष्टीये# प्रमण्हि द्वितीयाया शुम्न्याहुत इति व्यवधानम् #वनेष्वर्षासोमायाःशाकवार्शसन्तनिवर्ण हरेषु #आर्षसोमाया शाकलवार्शसन्तनिशाकरवर्णवाभ्यांपांहरेषु सिदीन्यो-नौवनेष्विति व्यवधानमेवा ॥ ० ॥

इति पुष्पसूत्रभाष्ये तृतीयस्य नवमी कण्डिका समाप्ता ॥९॥

पृष्ठेषु सुज्ञाने स्वाध्यःसोमाः पवन्तायां वित-मधुनिधनांधीगवेषेषघ्नीषेषु संवत्सरेणेषु प्रबोधियोयां प्रवह्लीशसारथ्यायामीवसु वसुन्यपवमानरुचायां वि-शीये मर्त्येषु दानायवायांयां लेपश्चायन्तीपयोः कविमियायां चौशाने व्यश्नुहिसंक्षारे पिबात्वस्यव-र्त्ताभिनिधनयो रयंत्यस्य सामराजे स्वस्तयेदविज्ञी-

---

*पृष्ठेषु सुज्ञाने* ऋद्धात्परोध्यौलुप्तानित्यस्योत्सर्गस्यापवा-दाधिकारः प्रकृतः स एवानुवर्तते । ऋद्धादपि परौष्ठौ न लुप्येते मामाश्विशुरन्धायाः सुज्ञाने पृष्ठैरयादिति व्यवधान-मेव च *स्वाध्यः सोमाः पवन्तायां वितमधुनिधानान्धीगवेष-घघ्नीषेषु* सोमाः पवन्ताख्यायां गौरीवितमधुश्चुन्निधनान्धीगव-निषेधघ्नायघ्नीषेषु स्वाध्यमेव व्यवधानमेव *संवत्सरेणेषुप्रबोधि-यायां प्रवह्लीशसारथ्यायामीवसु* सोऽयासीद्वितीयायां पवस्युत्सं-वत्सरेणेति प्रवह्लार्गवलीशायन्नसारथीन्द्रस्यायामीवसुर्व्यवधानमेव *वसूनि पवमानरुचायां विशीये* पवमानरुचायां त्रिशोविशीये विश्वावसूनि इति व्यवधानमेव *मर्त्येषुदानायवायांयां लेपश्चा-यन्तीपयोः* अच्छानः शीरशोतृतीयायां कालेयश्चायन्तीपयोः द्वितीयोमुद्मत्नोमर्त्येष्विति व्यवधानमेव *कविमियायां चौशाने *मेष्ठं वोद्वितीयायां गायत्रीसामौशाने निमर्त्येष्विति न व्यवधा-नलोपः *व्यश्नुहि संक्षारे* पवमानस्य जितृतीयायां इच्छासं-क्षारे पवमान व्यश्नुहीव्यवधानमेव *पिबात्वस्यवर्त्ताभिनिध-नयोः* आत्वासहस्रमान्त्यायां अभीवर्त्ताभिनिधनयोः पिबा-त्वस्य गिर्वण इति अलोपः *अवन्त्यस्य सामराजे* परि-प्रे मध्यमायां सामराजे अर्चन्ते अस्यवन्त्यो व्योस्थ(?)मिति

ये दीयाङ्गीये स्वाहुतः सदुद्रवायां वारदेव्ययो र्बृह-
ति च गीथे दीर्घवृद्धोपहितहिपदांतआधिभूतोका-
राकारयोः प्रत्ययोः संधौ यकारमापद्यते गतिर्वि-
रतेवायव्यंद्रो ३२३ पवमानाभा ३ यार्पा ३ सा३एवं-
जातीयानि नार्वसिपुनानायां यथा गौगवाभीवर्त्तयो-

---

न व्यवधानलोपः *स्वस्तये दीवङ्गीये* दीवशुतृतीयायां यज्ञा-
यज्ञीये ऋथकूसोमस्वस्तये इति न व्यवधानलोपः *दीयाङ्गीये*
वृषामतीप्रथमायां यज्ञायज्ञीये इन्द्रस्य हार्देति अलोपः *स्वा-
हुतः सदुद्रवायां वारदेव्ययोः* एनावोतृतीयायां वारवन्तीय-
वामदेव्ययोः सदुद्रवःस्वाहुत इति न व्यवधानलोपः *बृहति
च गीथे* बृहति च उद्गीथविषये स्वाहुत इति व्यवधानमेव
*दीर्घवृद्धोपहित इतपदान्त आधिभूतोकाराकारयोः प्रत्यय-
योः सन्धौ यकारमापद्यते गतिर्विरतो वा ३ यव्यद्रो ३२३३
पवमान ३ मा ३३ यार्पा ३३ मा ३ एवं जातीयानि* दीर्घ-
पूर्वोवृद्धः पूर्वश्च इपदान्त आइभूत अकारआकारयोः सन्धौ-
यकारमापद्यते विरतेगतिर्भवति तदुदाहृतम् । अत्राहि गतिश्चा-
न्तस्थामापद्यते इति यकारापत्तिरमध्य इति लोपः पुनरनेन-
वचनेन भोगयकारोभवतीति एषा वाहूकभाष्यकारेण व्याख्या-
नं कृतम् । अस्मद्गुरवः ब्रुवते अनेनग्र-यकारेण स्वयमेव भोग-
यय उक्तः एकारादकाराच्चभोग इति आच्छिकानामपि नैव
इकारात् भोग उक्तः तस्मादेका[illegible]त् भोगोभवतीति अत्र यथा-
भिमतं ग्राह्यम् । *नार्वसि पुनानाया यथा गौगवाभीवर्तयोः*
पुनानाया गौगवाभीवर्तयोः अपोनसानो अर्षसीति पूर्वक्ष-

भ्वीयसीप्रमयंहिष्ठीये ऽर्चन्त्युद्धंशपुत्रे विश्वान्यर्य-
आपर्णेदत्तवोधीपर्यभेष्विन्द्रायच्छंतिस्रुचश्चरंतिनैये दाधि-
पत्नीपक्रौञ्चयोः स्याश्विनोर्वोधीये ऽधाह्येकमदवेश्यं-
तमासहोदैर्घ्यभयोर्वैराणिज्ञीपवस्यावाह्वयोरेकारे च

---

यकारप्राप्तस्य प्रतिषेधः *भ्वीयसीप्रमयंहिष्ठीये* प्रमू५ःहिष्ठा-न्त्यायां भ्वीयसीति यकारप्रतिषेधः *अर्चन्त्युद्धंशपुत्रे* अ-र्चन्त्यर्कमिति यकारप्रतिषेधः *विश्वान्यर्यआ पर्णेदत्तवोधीप-र्यभेषु* उद्वान्त्यायां सौपर्णे दत्तवोधीयेप्वमानपर्यभेषु विश्वान्य-र्य इति यकारलोपः *इन्द्रायच्छन्ति स्रुचश्चरन्तिनेनैये* य-दिन्द्रयाकूअन्त्यायां इन्द्रयच्छन्तियकारलोपः । अत्र आयाहिम-ध्यमायां स्रुचश्चरन्तीति इपदान्तस्य दीर्घहृद्धोपहितस्य अकारे अकारमत्ययस्य च सन्धौ यकारप्राप्तस्य च यकारप्रतिषेधः । एवं सर्वोदाहरणेषु द्रष्टव्यम् *दधिपत्नीपक्रौञ्चयोः* सोमाः प-वन्तमध्यमायां यज्ञायज्ञीयक्रौञ्चयोः सोमासोदध्याशिर इति य-कारप्रतिषेधः *स्याश्विनोर्वोधीये* प्रतिष्ठान्त्यायां उतमरुत्वा-स्याश्विनोरिति यकारप्रतिषेधः *अधाह्येकमदवे*अग्नेतमद्यमध्य-मायां साकमश्वे अधाह्य इति यकारप्रतिषेधः *मान्तमासहोदै-र्घ्यभयोः* श्रुधीहवायां सहोदैर्घ्यवैराजर्षभयोः कुच्चाद्धुत्वाऽश्मीति-यकारप्रतिषेधः *वराणिज्ञीपावस्थानाह्वयोः* सोमः पवते तृतीया-यां यज्ञीयवैष्टुभयावाह्वयोरन्तः पवन्तजनेमावराणीयकारप्रति-षेधः *यकारे च यकारं यकारंयायोद्गार्गातिमाँश्चपदान्तः स-न्धीयलोपोविस्तरेपता २ इये २ स्यापरा २ इये २३ उमता इये २३० दीर्घहृद्धोपहित इत्यनेन लक्षणप्राप्तस्य विशेष उच्यते ऐ-स्यायउद्गार्गयोः असान्तिलोपाशिशुंजज्ञानं तृचयोः पुनानोवा-

यकारंयामोद्धतोर्गतिमांश्च पदांतः संधौ यलोपो वि-
रतेरमतोयियेर३ स्यापरोयिये २३ अमतोयियेर३ एका-
राद:काराच्चभोगः क्वचिदिकारादोवौकारयोरेकीभा-
वेलोपः ॥ १० ॥

वृद्धमंतः पदे तालव्यमाभवति हादौ स्तोभे-
प्रत्यये प्रतिभागन्तदार३हार३यिपर्मा२०वयममृंजा-

---

रमत्ये इति पूर्वलक्षणेन रमता ३ इ ३३ एवं प्राप्ते अत्रविशेषः
गतिमानाद्यन्तोपपत्ति रमता इये ३३ एवंविशेषः । परेष्वप्युदा-
हरणेष्वेवमेव द्रष्टव्यम् *एकाराद: काराच्चभोगः*
यकारोभवति शुक्तं पूर्वस्मान मजन इति भोगः उदाहर-
णम् पद्मसाकमक्वे राभिर्वर्णामइन्दुभिरिति सकारेमध्यमयः य-
पावमिति यकारपपस इन्दुरितिस्थितेरमध्य इति यकारलोपः
वर्षासइन्दुभिरितिस्थितेभोगयकारः एकाराद्भोगः अकाराच्चनि-
द्धः शुक्र आहुत इति अत्र अस्थाद्यमिति विसर्जनीयस्य यका-
रापत्तिरमध्य इति लोपः ततो ऽक्रायां इत्यत्र यकारो भवतीति
भोगः *क्वचिदिकारादोवौकारयोरेकीभावे लोपः* ओवा अ-
कारश्च ओवौकारौ तयोरोवौकारयोरेकीभावेलोपः उदाहरणम्—
उवावाः सतोमहो वा, अकारो दाहरणम् कुतोहो ३ वोति ।

इति पुष्पसूत्रभाष्ये तृतीयस्य दशमी कण्डिका समाप्ता ॥

*वृद्धमन्तः पदेतालव्यमापद्यति हादौस्तोभेप्रत्यये प्रतिभागं
तेदा ३३ हा ३ ३ इयर्मा ३ वयममृं जाता ३३ वा ३ हुं ३
मायि महा हास्तौदसा ३ ३ हो ३ यि एव जातीयानि *भा-
वाः मकारान्ताः तत्र औतहारान्ताव्याख्याताः इदानींक्रमप्रा-
प्त आभावः स इदानीमुच्यते । कस्मिन्प्राप्ते इदमारभ्यते । ताल-

ता२३याशुमायिमहाहस्तीदक्षा२३होएवंजातीयानि न-
हिन्वितवर्यौरिंद्रायश्सौभरे ऽचिक्रमृज्यमानायाश्रं-
ध्रोतरवाजजिन्मतेष्विव वदुहानायां पृश्निमंतयोर्गायं-
तित्वायां च त्वाष्ट्रीसाम्नि कानितिस्रोवाचायाश्सैधु-
क्षितौशनयोः सश्हितेत्साभवति वारे सर्वत्रांतःप-
दं ना भवति स्वास्वाभवतिनिमश्योद्गने विष्णुव

---

व्यमायिपक्षुद्धमिति उद्धस्य तालव्यस्य आईभावः मात्रः तत्रा-
न्तःपदिकस्य तालव्यस्य हकारस्तोभपस्यवेस्य अयं विशेषः
आभावोभवति न गानेरित्यर्थः । तदुदाहृतम् सौभरवक्षायज्ञीय-
राश्याकूपारेषु *नहिन्वितवर्यौरिन्द्रायाश्सौभरे* पूर्वलक्षणमा-
प्तस्यापवादः उद्धस्यान्तःपदिकस्य हादिस्तोभपदस्यवेस्य ताल-
व्यस्य आभावप्राप्तस्य प्रतिषेधः उत्सर्ग एव प्रतिश्रूयतेगोतिरेव-
भवतीत्यर्थः । तवर्यौरिन्द्रायां सौभरे त्वायापः पूर्वतासश्च हि-
न्वीति आभावप्रतिषेधः *अचिक्रमृज्यमानायाश्रन्ध्रोचरवाज-
जिन्मन्तेषु* मृज्यमानोद्गीथाया अश्योरन्ध्रउत्तरवाजजिन्मन्तेषु
ऋषो अवीति आभावप्रतिषेधः *इवदुहानाया पृश्निमन्तयोः*
तवाहश्सोमास्त्वाया पूर्वेनसमन्तयोः शक्मना इवेति अनाभावः
*गायन्तित्वाया च त्वाष्ट्रीसाम्नि* गायन्तित्वापायां द्विपन्तु-
र्वमैत्वाष्ट्रीसाम्नि उद्धश्शमिवेति अनाभावः । *कानितिस्रोवाचा-
याश्सैन्धुक्षितौशनयोः* तिस्रोवाचायां सैन्धुक्षितगायत्रीसामौ-
शनयोः हरिरेतिकनीति अनाभावः *सश्हितेत्वाभवति* । स-
शंहिते तुक्तानिशब्दः आ भवति *वारे सर्वत्रान्तः पदं ना
भवति ।* उपरे वारवन्तीये तालव्यस्यान्तः पदिकस्य सर्वत्रामा-
भावः । यथा एवुन्वायान्तयोः । अपा पुवस्ते इति च

इत्येतौ शब्दावर्षासोमायाऽशाकले वरिवः सन इ-
न्द्रायां कौत्से पञ्चस्वर्यो साके सवीरायां वैश्वामित्रे
डिनद्वितीयायां त्वाऽरिहंतीत्यत्र च त्वाष्ट्रीसाम्नि
रभिसुपावसोमायाऽरौरवे रहस्ये च संक्रातिनि गौ
श्रृङ्गेस्वर्विदः सुम्नेषु मानस्तरभीत्यत्रजमदग्नेर्षेधयो
र्माशिवासः प्रहिन्वान इति च पूर्वे जनित्रे गीर्भिरुत्त-

---

*त्वाश्वाभवतीतिनेमवर्षाव* स्वासु वारवन्तीयोत्तरे निमश्वादि-
ति अनाभावः *वनेविष्णुव इत्येतौ शब्दावर्षासोमायाऽशाक-
ले* अर्षासोमाद्ययोः शाकले, सौदन्यौधने वालब्दस्यान्तःप-
दिकस्य सोमाअर्षन्तुविष्णवे अनाभावः *वरिवः सन इन्द्रायां
कौत्से* उच्चाद्द्वितीयायामैडकौत्से वरिवोवित्परिस्रव इत्य-
नाभावः *पञ्चस्वर्योसाके* अश्वर्यामथमायां धुरासाकमश्वे
सोमस्पवि- इत्यनाभावः *सवीरायां वैश्वामित्रे* महुन्वाना-
स्यायां वैश्वामित्रे पविशब्द एव हारिः पविने इत्यनाभावः ।
*डिनद्वितीयायाम* । पविशब्दएव पदीपन्नीतिमतआश्विद्वितीे-
याया · सौखण्डिने अनाभावः पविशब्दस्य *त्वाऽरिहन्तीत्यत्र-
त्वाष्ट्रीसाम्नि* पविशब्द एव यत्स्वनाद्वितीयायां उत्तरेद्वियन-
न्तेत्वाष्ट्रीसाम्नि हरिपवीति अनाभावः *रभिसुपावसोमाया
ऽरौरवे* परीतोषि द्वितीयायां रौरवे अदब्धः सुरभीति अना-
भावः *रहस्ये च संक्रातिनि* रहस्याविषये च संक्रातिनि अदब्धः
सुरभीत्यनाभावः *गौश्रृङ्गे स्वर्विदः* आजागृविस्तृतीयायां गौ-
श्रृङ्गे स्वर्विदोअभिगा इत्यनाभावः *सुम्नेषु मानस्तरभीत्य-
त्रजमदग्नेर्षेधयोः* पिबासुतान्स्यायां जमदग्नेर्गोत्रत्तनिषेधयोः
आतः सुम्नेष्वित्यनाभावः *माशिवासः प्रहिन्वान इति च पूर्वे

रे श्रीणाहविषे सवाज्यपक्षायां अवेजिघवमानस्य जिघ्रतायां च ब्ववघपदिमायामुत्सेधे हिन्वाभिसोमायां तुनिभीशावयो दीर्घनिषेधे पुरोजित्यां जम्भस्वरयोरनाभावस्तालव्यस्पान्तःपदिकस्य दीर्घशब्दस्त्वाभवति पुरोजित्यां जम्भेस्वरेचाभवति सहा-

---

जनित्रे* पूर्वे जनित्रे इन्द्रक्रावष्पमायां माशित्रासइत्यनाभावः । तथा अभिसोमाम्नायां प्रहिन्वान इत्यनाभावः *गीर्भिरुत्तरे* उत्तरे जनित्रे तंवोदस्ममष्यमायां इन्द्रगीर्भिरित्यनाभावः *श्रीणा हविषेसवाज्यक्षायां* सवाज्यक्षाद्वितीयायां सौहविषेगोभिः श्रीणान इत्यनाभावः *अवे जिघवमानस्य जिघ्रतायां* नतनिधने वाभ्रवे पवमानस्य जिघ्रतायां पवमानस्याजिघ्रान्त्यायां जीराअजीःत्यनाभावः *ब्ववघपदि मायामुत्सेधे* मत्नयीयूहतीयायामुत्सेधेदुवाचवीरित्यनाभावः *हिन्वाभिसोमायान्तानिभीशावयोः* अभिसोमान्त्यायामाभीशवमन्तनिनोः प्रहिन्वान इत्यनाभावः *दीर्घनिषेधे पुरोजित्यां* पुरोजितीप्रथमायां निषेधे सखायोदीर्घजीरत्यनाभावः *जम्भस्वरयोरनाभावस्तालव्यस्पान्तःपदिकस्य* बृहद्विरने वार्कजंभे मयये च स्वरे अनाभावः तालव्यस्पान्तःपदिकस्य यथा बृहद्विधने वार्कजम्भे त्वामिच्छुत्तरयोः । सत्व न श्चिनगामश्वर्यरथ्यामिन्द्रेति च । तथात्वर्यदोह वोचमानां । आपुरन्दरस्वक्रमानीति अनाभावः । स्वरे च प्रथमे मत्यसे आययोः त्रिशानि रिन्द्रर्यशुतेभिरिति च *दीर्घशब्दस्त्वा भवति पुरोजित्याजम्भे* पुरोजित्यायां जम्भे अपवादः *स्वरे चाभवति सहावा इन्द्रेत्यपवादन्द्र आनस्तेगंतुमसरइत्यत्र* पूर्ववदपवादः । मत्ययायांद्वितीयां सहावादइन्द्रेत्याभावः *अ-

वाऽइन्द्रेत्येपशब्द आनस्तेगन्तुमासरइत्यत्रावृद्धम-
ध्याभवति जितीयोदीक्रौञ्चे पिपरीतायां माधुच्छन्दसौ
वरिवःसन्न इन्द्रायां मार्गीयवे जरिस्वारे पर्णे मदिन्त-
मदिष्ठनोगिहाविष्कृते यिशावश्विनोर्व्रतोत्तरे ॥ ९.१ ॥

पदान्तश्चाभवति मातेमेतमथायांक्रमश्वे ध्यैनी-
यारोत्तरे ज्ञीयेस्यन्दतकृण्वते चर्षणीरथीत्पर्यिंहावि-
ष्कृते वरिवोधायां नुव्यमीनः कौत्से वृधेस्माऽहियास्तु-

वृद्धमध्याभवति॥ वृद्धस्यान्तःपादिकस्य तालव्यस्य ह्रादिस्तोभ-
भूस्यपदस्याभाव उक्तः। अथेदानीमवृद्धस्याभावः ह्रादिस्तो-
भस्यपदस्योच्यते। आपिशब्दादन्तःपादिकस्याभाव उच्यते व-
क्ष्यमाणेषूदाहरणेषु *जितीयोदीक्रौञ्चे* मध्यनिधने ऐन्द्राक्रौ-
ञ्चे पुरोजित्वां पुरोजितीमवायोदीतिचाभवति। *पिपरीता-
यां माधुच्छन्दसे* पिपरीतायां माधुछन्दसे पिशब्दः अवृद्धो-
ध्याभवति *वरिवः सन इन्द्राया मार्गीयवे* उत्तापध्यमायां
मार्गीयवे वरिवइत्याभावः *जरिस्वारपर्णे* कयानश्चित्रान्त्या-
यां स्वारसौपर्णे अविताजरीत्याभावः *मदिन्तमदिष्ठनोगि-
हाविष्कृते *हाविष्कृते त्वमुत्तमांक्षि स्वादिष्ठयामदियरिस्त्वानो-
गिएतेत्याभावः *यिशावश्विनोर्व्रतोत्तरे* उत्तरे अश्विनोर्व्रतेयि-
न्तवे इत्याभावः॥

इति पुष्पसूत्रभाष्ये तृतीयस्य एकादशी कण्डिका॥ ११॥

---

*पदान्तश्चाभवति* अन्तः पादिकानामाभाव उक्तः। अथे-
दानीं पदान्तीयस्याभाव उच्यते *मातेमेतमथायाङ्क्रमश्वे* स्वा-
रसाक्रमश्वे अमेतमथायां ऋच्यामाता इत्याभावः *ध्यैनीया-

तायां पृष्ठजमवर्तयोः पवन्तेभिसोमायां मैधातिथे नि-
ष्कृतश्रुणसाम्निवृषो अचिक्रायां परीतायां च परि-
ष्वा ऽधिसोमउष्वावाग्ने सुष्वाणायां चान्धीगवे
ऽभिप्रियाणीयेचोक्तः कृपेस्वासुनैधे विदइन्द्रसुतायामु-

---

त्तरे *उत्तरे वारवन्तीये स्वासु वन्दध्याइत्यभावः *ह्रीये स्पन्दते कृण्वतेचर्षणीरधीत* यज्ञायज्ञीये पुरोजिद्द्वितीयायां परिमस्पन्दत इत्यभावः तथा अन्त्यायां पूर्वोत्तरयोः अयं पूर्वोत्तरयोः सोमासः कृण्वतेयः पञ्चचर्षणीरिति च । अभिप्रियाणितृतीयायां अभीरञ्जनस्य दोहनाअनूषातायीत्यभावः । प-रिस्वपंहर्यतप्रथमायांपोदेयां विश्वाइत्यभावः *पांवहाविष्कृते वरिवोधायां* स्वादिष्ठोत्तमायां हाविष्कृते पर्यइत्यभावः *लुम्पभिनः कौत्से* अभीनोवाजसप्तमायांएवकौत्से तु विष्णुमन्मित्यभावः *रुधेऽस्मात्पिबासुतायां पृष्ठजमवर्त्तयोः* पिबासुतायां पृष्ठाजमदग्नेरभीवर्त्तयोः । आपिर्नोबोधिसप्तमायेदुधेइत्यभावः *पवन्तेऽभिसोमायां मैधातिथे* मैधातिथे अभिसोमाद्यायांपवन्तेमधमित्यभावः *निष्कृतश्रुणसाम्नि वृषोअचिक्रायां* मृज्यमानतृतीयायां वरुणसाम्नि निष्कृतमित्यभावः *परीतायां च परिस्व *वरुणसाम्न्येवपरीतोषिञ्चद्वितीयायां नूनंपुनानोअविभिः परिस्रवेत्यभावः *अधिसोमउष्वावाग्ने* सोम-उष्वान्त्यायां वाग्ने अधिष्णुमीत्यभावः *सुष्वाणायां चान्धीगवे* आन्धीगवे सुष्वाणासोव्येतिअस्य चाभावः चशब्दादधिस्वन्दम । आंगन्वधीतेः *अभिप्रियाणीयेचोक्तः* अभिप्रियतृतीयायां च यज्ञायज्ञीये अधात्रिपृष्ठेत्यभावः *कृपे स्वासु नैधे* स्वासु नैधाविधे द्वितीयायां, यद्गामेषुभेत्राकेकृपइत्यभावः *वि-

द्रᳬशीये मधुनिधनेरवाचिसुष्वाणायां यिन्तवेपुरोजित्यां प्रतेशैखण्डने पातवेनौसᳬहिते शस्तयेतन्त्वामदायाᳬसँहिते गविष्ठयेभिघुच्यावने दिवेरवाष्ट्रीसम्नोः सहस्रधारायां मादेनौरेवतीष्वेतिध्यमायांमहानाम्नीष्वभिश्यैते सद्दिदासतृतीयायाम् ॥ १२ ॥

इति सप्तमः प्रपाठकः ॥

---

द इन्द्रसुतायामुद्रᳬशीये* इन्द्रसुतायामुद्रवᳬशीये विदेहयस्येत्याभावः *मधुनिधनेरवाचिसुष्वाणाया* सोमाः पवंतायां मधुश्चुन्निधने चितानागोरधित्वचीत्याभावः *यिन्तवेपुरोजित्यां* मधुश्चुन्निधन एव पुरोजित्याद्यायां सुतायमाद्यिन्तवइत्याभावः *प्रतेशैखण्डने* शैखण्डनेप्रत आश्विनीतिप्रतेशब्दस्याभावः *पातवेनौसᳬहिते* स्वादिष्ठायायांसᳬहिते इन्द्रायपातव इत्याभावः *शस्तयेतंत्वामदायाᳬसᳬहिते* अभिक्रदद्वृषाहीरिसंत्यायाᳬसᳬहितएव तत्रमशस्तयइत्याभावः *गविष्ठयेभिघुच्यावने* च्यावने अभिघुतृतीयायां गविष्ठयेत्याभावः *दिवस्वाष्ट्रीसाम्नोः सहस्रधारायां* स्वारयोस्वाष्ट्रीसाम्नोः सुतानामीत्यायांतस्वेंद्रस्यदिवेदिवाइत्याभावः *मादेनौरेवतीषु* रेवतीर्नइत्याद्यायारेवतीषुसधमादइत्याभावः *अतिष्वमायांमहानाम्नीषु* छांदसीषु महानाम्नीषु माध्यया सनःइर्षदतीत्याभावः *अभिश्यैतेतदिदासतृतीयायां* तदिदासात्याया श्यैते अदः सुमधुमधुनीभात्याभावः ॥ १२ ॥

इति पुष्पसूत्रभाष्ये तृतीयस्य द्वादशी कण्डिका समाप्ता ॥

तृतीयः प्रपाठकः समाप्तः ॥ ३ ॥

यकारे च प्रत्यये वृद्धमन्तः पदे तालव्यमाभवति यच्च यकारसंयुक्तं विकृष्टं स्तौपे मित्रमिव मा२१ यां सोमा २ विश्वात्वा २३ या एवं जातीयानि न र्थ्यं महस्तवानायां कण्वबृहति रहस्ये च बृहति नर्यः सनोहरीणायामित्यत्र चैत्रे चाम्रे च परीतायामन्त्योधर्त्तायामुद्वद्गार्गेच ईयतुस्त्वमिन्द्रमतूर्तिविश्वत्राभीवर्त्ते पीयंत्यभ्रातृव्यद्वितीयायामामहीयवे पी-

---

*यकारे च मत्यये वृद्धंतःपदे तालव्यमाभवति' यच्च यकारसंयुक्तं विकृष्टं स्तौ ३ पेमित्रमिवमा १ यातोमां वि-श्वावा एवं जातीयानि* न केवलं द्वादौ स्तोभे मत्यय' आ भवति यकारे च मत्यये वृद्धंतः पदे तालव्यमाभवति।। यका-रसंयोगे च योविकृष्टो यकारस्तस्मिंश्च मत्यये आ भवति तदुदाहृतं *न र्थ्यं महस्तवानाया कण्वबृहति* उत्सर्गमाप्ता-नामपवादोवक्ष्यते स्वामिद्धीतितृतीयायां कण्वबृहति। गाम-श्वं र्थ्यमित्यनाभावः *रहस्ये च बृहति *त्वामिद्धंस्यायामेव रहस्यविषये बृहति गामश्वं र्थ्यमित्यनाभावः *नर्यः सनोहं-रीणायामित्यत्रचैत्रे* गोमन्नाद्वितीयायां चैत्रसंवेरसत्त्वपनेर्यइत्यना-भावः *चाम्रे च परीतायां* परीतोपिप(रीतोप्यायायामिति) म-धमायां चाम्रे दधन्वाश्योनर्य इति अनाभावः *अन्त्योधर्त्ताया-मुद्वद्गार्गेत्रे* धर्त्तामध्यमायामुद्वद्गार्गे हरिःसूनानोअःर्योइत्यना-भावः *ईयतुस्त्वमिन्द्रमतूर्तिविश्वत्राभीवर्त्ते* त्वमिद्रमतूर्तमध्य-मायामभीवर्त्ते तुरयंतमीयतुरित्यनाभावः *पीयंत्यभ्रातृव्याद्विती-यायामामहीयवे* अभ्रातृव्याद्वितीयायामहीयवेर्यांयंति ते इत्यना-

पन्तवेमानइन्द्रायां थारे स्फिरयं माभे मवृहति हीय-
यमहेनोरेयाराजीये तृतीयमृतस्य जिह्वायां ना-
भवति सर्वत्र ङीये स्याभवति पदान्तश्चाभवति श-
र्मणि प्रदे ङीये काण्वे रन्ता स्वरे च थियस्ता वृद्धम-
स्याभवति प्रिय॰ सूनुर्यतरे संमील्ये जिह्मनकृत्य-

---

भावः *पीयन्तवेमानइंद्रायां वारे* रेवा इंद्रांयायां वारवन्तीये मा-
नइंद्रपीयन्तव इत्यनाभावः *स्फिरयंमाभेमवृहति* माभेमद्वितीयायां वृहति सख्यामनुस्फिरमित्यनाभावः *हीयमहेनोरा-
रयोराजीये*रायोराजीये साम्युछमहीयपोव्योमहीय इति चा-
नाभावः *तृतीयमृतस्य जिह्वया ना भवति सर्वत्र *अ-
भिप्रिद्वितीयायां सर्वसामसु नामतृतीयमित्यनाभावः *ङीये स्या-
भवति* यज्ञायज्ञीये तु नामतृतीयशब्दस्याभावः *पदा-
न्तश्चाभवति* इदानीं पदान्तीयस्याभावउच्यते । यकारमत्य-
यस्य यदुत्तरत्र वक्ष्यति *शर्म्मणिप्रदेङीये* प्रदेवोङीये-
द्वितीयायामक्षरसंसर्गे णिकारस्याभावः णा २ या ३ *काण्वे
रन्ता* काण्वे वयमुत्वामथमायां काण्वानुक्थेभिर्जरन्तइति
तेशब्दस्याभावः *स्वरे च थियस्ता* सुमन्मानतृतीयायां प-
योनिधने स्वरे त्रियस्तस्तम्भेति पदान्तः स्याभावस्ता २ या स्त-
१ स्तं १ भो २ दसा ३ ऋ ३३ हो३३ पदान्तस्ययका-
रः *अद्रुमस्याभवति* इदानीमद्रुस्य पदान्तस्य
तालव्यस्याभाव उच्यते । यदुत्तरत्र वक्ष्यते *प्रियः
सूनुर्यतरे* मसोमदेवतृतीयायां कण्वरथन्तरे प्रियः सूनु-
रितिप्रस्तावे अनाभावः। मा २ यः १ अत्रइकारस्याभावः।
पदान्तरे तु अनाभावः। पकारेसुनु १ र्न १ म १ जि १ या ३

दवयाधिया ग्रहणाध्यैनौवारे प्रथमे पवस्वदा सुज्ञा- नेड्रदाशंकुनि विष्टया वाचः साम्नि वयुनावासिष्ठे दिवियज्ञायथोत्तमायां बृहति कृत्व्यास्तौरश्रवसे ॥ १॥

ऊँवौकारयोरनन्तरस्वरनीचाधयोः प्रत्ययर्योः

अत्र इकारस्य पदांते यकारः *सम्यीस्वेभिर्हितकृत्व्यश्वाधि- या* समीरयेपुरोजितिसूक्तेदीर्घजिह्वन्दुरक्तोनकृत्वः सोमोवि- श्वोन्धाधियेति पदांन्तानामभावः ॥ अ २ य १ माना २ तु २ । त्वा ३ या २ धा २ या १ घा २ या १ इकारस्यैपदान्ते यकारे *ग्रहणाध्यैनौवारे प्रथमे* सौद्रे वारवन्तीये पौनौ बंदध्याइत्याभावः । ग्रहणाद्वृद्धस्यापिभवति । पराणि च उदाह- रणान्येतंरूपाण्येव निपात्यन्ते *पवस्वदा सुज्ञाने* सुज्ञाने पवस्वदेवमौतयाधानाआभावः । ग्रहणादपदान्तस्य वृद्धस्या- भावः *अड्रदाशंकुनि* स्वर्धंगड्डूदयाधायारकुनिनिपात- नम् *विष्टया वाचः साम्नि* अभिघुन्नतीयायां वाचः साम्नि जिन्वतावितुष इत्याभावः *वयुना वासिष्ठे । *वा- सिष्ठेद्वितीयायां आवयुनेभिरत्याभावः *दिवियज्ञायथोत्तमायां- बृहति* आसूर्यंरोहयोदिवीत्याभावः *कृत्व्यस्तौरश्रवसे* सत्रायोदीरयनइन्दुरक्तोनकृत्व्यइत्याभावः । ध्यैनौवारइत्यारभ्य निपातयन्वइत्युक्तम् ।

इति पुष्पसूत्रभाष्ये चतुर्थस्य प्रथमकण्डिका समाप्ता ॥

---

ऊँवौकारयोरनन्तरस्वरनीचाधयोः प्रत्ययर्योः सर्व गृह्यमाण- स्यन्तत्योधश्च यथा भरतामेभेधवाइनिहवसायेषु नकृच्छेयनविदी- योः* ऊकाच अकारश्च ऊँौकारौ तयोरोवौकारयोः अन-

सर्वं वृद्धमाभयत्यन्तलोपश्च यथाभरनार्मेधैश्मवा-हानिहवसाध्रेषु नकुच्छयेतविशीययोरथापवादा रागः स्वःपृष्ठनैपातिथरश्मेषु संगृभायून इत्यश्वाकूपारे दू-रेदृविराद्वसुदैव्ये नकारः परिस्वानाथार्मैध्मवाहे म-कारः कार्त्तयशमन्तयो रापृच्छयᳪसेधे रथीनार्मेधे

---

न्तरे स्वरे याद् नीचादिभावः । न द्रुभयथापि । तथाप्यानन्तर्ये-मुपपद्यत इति अतोनीचाद्ययोरिति विशेषणम् *सर्वं वृद्धमाभयति अन्तलोपश्च यथाभरनार्मेधैध्मवाहानिहवसाध्रेषु नकुच्छयेतविशीय-योः* वृद्धमवृद्धं च तालव्यं पदादीयमपदान्तीय च सर्वग्रहणात् । उदाहरणानि सौभरे वयमुत्वादिषु । नार्मेधेहोन्द्र अभाहीन्द्रादि-षु । ऐध्मवाहे परिस्वानादिषु । निहवे पारत्पन्द्रादिषु । साध्रे मधुग्वानादिषु । नकुत्र । आनोविश्वान्त्यायाᳪश्यैतसद्वोविशीय-योः । भसितस्पर्शानकादिति *अथापवादाः* पूर्वलक्षणमात्रा-नामपवादा वक्ष्यन्ते *रागःस्व पृष्ठनैपातिथरश्मेषु* स्वःपृ-ष्ठादिषु रङ्ग एव भवति । नाभावः । यथाहᳪनोमयथमाया परि-धीᳪरतीति । तथा नैपातिथे वण्महायायां, तथा पार्थुरश्मे इन्द्रो-मदातृतीयायां । अस्मारङ्गद्वसाविति *संगृभायून इत्यश्वाकूपा-रे* राश्वाकूपारे संगृभायेत्यनाभावः *दूरेदाविराद्वसुदैव्ये* अग्निनरायाया वामदेव्ये दूरेदइत्यनाभाव *नकारः परि-स्वानायामैध्मवाहे* पवित्रे सोमोअक्षरादितिनकारस्यानाभावः सा २ ए २ दो ३२३३ वा २ अत्र नकारस्यानाभावः । रेफ-स्यैवभवति । वामस्ये *मकारः कार्त्तयशान्तयोः* अभीनो-वायाया कार्त्तयशे रयिपर्णमायिमकारस्यानाभावः समते च पुना-नाद्वितीयाया पशुमिर्य इत्यनाभावोमकारस्य *आपृच्छयᳪसेधे*

प्रायश्चित्तेषु पार्थुरश्मे स्वास्वाःकारवर्जं मोकारः सत्वायः सोशाक्त्ये मदायतोनवे वायुमारोभासे महाॅंश्चरातिवाशो सूर्यमरोनैये सुपावसोछंदसद्वैगतयोः स्तोभो गोद्वौगते सोमसुज्ञाने भुवनोटते

---

वत्सेधे पुनानः सोतृतीयायां आपृच्छ्यंघरुणमित्सनाभावः *रथीनामैधेप्रायश्चित्तेषु* इन्द्रंविश्वाद्यायां मायश्चित्तेषु नार्म्मेधे रथीनामितिमकारस्यानाभावः *पार्थुरश्मेस्वास्वाःकारवर्जम्* स्वासु पार्थुरश्मे आभावमतिषेधः । आःकारवर्जमिषाइन्द्रस्येतिमिषा इत्यस्य आःकारस्यआभवति ॥ वामत्यये । अन्यत्र व्यंजनस्य ऊष्मणोऽपिच अनाभावः । उपांतीयस्याक्षरस्यैव आभावो भवति नचानान्नोकाचानुति *ओकारः* वक्ष्यमाणेषूदाहरणेषु ओकारस्याभावमतिषेधः *सत्वायः सोशाक्त्ये* याक्वे गौरीवीते सत्वायः सो इत्यनाभावः ओकारस्य *मदायतोनेव* सोमउष्मान्त्यायां मानवेमंदीमदायनो इति ओकारस्यानाभावः । अथ ओकारस्यअकारेमत्यये अनाभावः *वायुमारोभासे* पवस्वदेवाद्यायां भासे वायुमारोहइत्यनाभावः *महाॅंश्चरातिवाशो* कईवेदमध्यमायां वाशोमहाॅंश्चरसीति मतिषेधः *सूर्यमरोनैये* नैयातिथे इन्द्रमिद्देवतातृतीयायां इद्रः सूर्यमरोइत्यनाभावः *सुपावसोछन्दसद्वैगतयोः* मायुछन्दसद्वैगतयोः परीतोपिमथमायां अनाभावः । *स्तोभोगोद्वैगते* द्वैगते परीतोपितृतीयायां श्रोणंतोगोइत्यनाभावः तो २३ गे ३२३३ ऋ २ हो २ वा २ प २२ मकारस्यौकारः *सोमसुज्ञाने* पवस्वाद्यायां मधुमान्त्सोम इत्यनाभावः । माधुमा २२ मो २३३२ ऋहो २ वा २ उकारेषोकारे *भुवनोटते* ऐटनेअस्यमजातृतीयायां पुनानोभुवनेइत्यना-

यिनोंघोत्सेधे उवर्णतुनसर्वत्राभवति ग्रहणादाभवत्यु-
भयं स्वासुमेधातिथे नः सुवारेप्रथमे प्रियः सूनुर्द्व-
गतगौंगवयो ,रिंदुर्गोतमसाध्रयो रकूसिष्ठप्रियेपदिंद्र-
चित्रायाॅं शिशुॅंसर्वत्र ॥ २ ॥

ऋगंतीयः स्पर्शः प्रथमः स्वरो नामि विसर्जनी-

भावः । *यिन्नोंवोत्सेधे* उत्सेधेपिवासुधायांआयिन्नोंवोइत्य-
नाभावः । आ २ पा २२३१ नोंशो २ । ह्न २ हो २ वा ३
हो १ दकारस्यअकारः *उवर्ण तु न सर्वत्राभवति* । इदानीं
ॲकारस्याभावप्रतिषेधोवक्ष्यते । यथानाम्मेधेअध्मद्धायायावग्मा-
ता २ ऋ ३ इत्येवमादीनि *ग्रहणादाभवति* ओवर्ण तु न सर्व-
त्राभवतीत्यस्यापवादोवक्ष्यते वक्ष्यमाणेषूदाहरणेषु *उभयॅं-
स्वासुमेधातिथे* मेधातिथेस्त्रास्त्वंत्यायां उभयंकरामित्याभावः वि १
द्व २ वं १ णॅंसंवः नमा २ ॡ २ हो ३ अत्र ॲकारस्य अ-
पदांतीयस्यऋस्तोभमध्येआभावः *नः सुवारे प्रथमे* वारवन्तीये
प्रन्वानः सुइत्याभावः *प्रियःसूनुर्द्वगतगौंगवयोः* प्रसोमदेद्वि-
तीयायां प्रियः सूनुरित्याभावः *इंदुर्गोतमसाध्रयोः* इंदुरध्वइ-
तिगौतमसाध्रयोरनाभावः *अकूसिष्ठप्रिये यदिन्द्रचित्रायाम्* य-
दिन्द्रचित्रायां वासिष्ठप्रियेअकूपारस्यदावनाइत्यनाभावः । आ ३
का ३ त्रु ३३२२ वा २ । अत्रसकारस्यअपदांतीयस्यस्वामत्य-
ये *शिशुॅंसर्वत्र* तिस्रोवाचद्वितीयायां सैंधुक्षितादिषु मर्ज-
यंतीर्दिवः शिशुमेविसर्वत्राभवति ।

इति पुष्पसूत्रभाष्ये अष्टमस्य द्वितीया कण्डिका ॥

*ऋगंतीयः स्पर्शः प्रथमः स्वरोनामि विसर्जनीयश्च ना
भवति, तत्रत्तौहोसन्द्रः प्रथमाव कृण्वते सदा ३ दो २३ हिया

यद्व नाभवति तत्रत्वौहोशब्दः प्रथमात्कृष्यते स· दादौ २३ ह्रिपामौ २३ स्तियोरौ २३ एवंजातीयानि दैव्ये त्वनृगंतीयः स्पर्शः प्रथमः स्वरोनाभि विस र्जनीयश्च नाभवति तत्र त्वौहोशब्दः प्रथमात्कृष्यत आपिताजरायिह्वतृणामौ २३ आ २३ हूमाहिश्रवस्यवा प्रायुमायिरौ २३ तुरीयं त्वा भवति शिशुं देव्ये सच· मानः समुद्रंतुरीया ३ औहोहाइ रहस्ये त्वृगन्तीयश्चा· नृगंतीयश्च स्पर्शः प्रथमः स्वरोनाभि विसर्जनीयश्च नाभवत्पृगन्ते त्वेव प्रथमकृष्टस्तोभ इत्यादिद्वितीया·

---

मौ २३ हितयो २३ रौ २२२ एव जातीयानि* औत्वौकारयो· रित्यनेन प्राप्तस्यापवादः ऋगतेभवत्यगतीयः स्पर्शः । प्रथमः स्वरो यः नाभि परश्च विसर्ज्जनीयः सर्वत्र ना भवति । तत्रत्वौ· होशब्दः प्रथमस्वरादारभ्य कृष्यते । उभयत्रापि तदुदाहृत रौ· रवाधीगवद्विहिकारेषु *दैव्ये त्वनृगतीयः स्पर्शः प्रथमस्वरो नाभि विसर्ज्जनीयश्च ना भवति तत्र त्वौहोशब्दः प्रथमात् कृष्यतआ ३ पिता २ जरा ३ इतृ णामौ २ आ २३ हूमाहिश्रमस्यवा प्रायुभा इरौ २२२* तदुदाहृतं स्याद्य वामदेव्ये एदुमध्येरिति च वा· मदेव्ये *तुरीयत्त्वा भवति शिशुदैव्येसचमा नः समुद्रतुरी २ या ३ औ २२ हो ३ इा ३इ* दैव्ये त्वनृगतीय इति प्राप्तस्याप· वादः । तदुदाहृतम् *रहस्येत्वृगतीयश्चानृगतीयश्च स्पर्शः प्रथमः स्वरोनाभि विसर्ज्जनीय नाभवति* रहस्ये तु ऋगन्तीयश्चानृगन्ती- यश्च स्पर्शः सर्वत्र एव ना भवति । नाभि परश्च विसर्जनीयो ना भवति । आशेम अभितोपययारायदिन्द्रयादिषु तृचेषु अन्तरिक्षे *ऋगन्तेत्वेव प्रथमकृष्टस्तोभस्त्यादिद्वितीयायां* ऋगन्त इत्या·

यां तृतीयादिन्यामौहोवायां चतुर्थस्थोद्वन्द्वः पदान्तः सर्वत्राभवति यथास्याश्चिशुमक्रान्वासिष्ठेषु श्यैतयारयोश्च तत्रापवादा रागोग्नेबृहति मत्स्यबृहतिस्सरः प्रत्युबृहत्ययोऽग्नेबृहतिजुष्टो यज्ञाछाहत्पूर्जो ऽयंपूपाबृहतिगावः श्येनोरयः सिष्ठे श्रृपोचायास्येश्रृपो

---

दद्वितीयायां प्रथमस्वरादारभ्य षष्ठे स्वरे प्रश्रये ना भवति । पूर्णासदर्शितं ऋतुमिति *तृतीयादिन्यामौहोवायां चतुर्थस्थोद्वन्द्वः पदान्तः सर्वत्राभवति यथास्यश्चिशुमक्रान्वासिष्ठेषु श्यैतवारयोश्च* तृतीयस्वरादिभ्यां औहोवायां प्रसयभूतायां चतुर्थस्वरस्थोद्वन्द्वः पदान्तः सर्वत्राभवति । रहस्येचान्यत्र च । यथा अस्यपेयांशिशुअश्नानं अक्रान्समुद्रतृचेषु वासिष्ठ अभिमवादिषु श्यैते स्वासु च वारवन्तीयादिषु *तत्रापवादाः* तत्र तस्यां तृतीयादिन्यां औहोवायामपवादा वक्ष्यन्ते *रागोग्नेबृहति* अग्नेविवस्वायायां बृहति अग्नादेवा-इति रङ्ग पत्रेतिनाभावः । अत्र स्वाभाविकदीर्घात रङ्गएव भवति नाभावः । यथादघन्वाङ् इति दर्शनात *मत्स्यबृहतित्सरः* मत्स्यबृहतिपात्रस्यैव हारिवोमत्सर इति सन्ध्यगीत एव नाभावःयथार्वेकेतथेव *प्रत्युबृहत्ययः* । प्रत्युबृहति अपोमहीत्यनाभावः *अग्ने,बृहति जुष्टः* । अग्नेविवस्वाया,बृहतिजुष्ट इत्यनाभावः । *यज्ञाबृहत्यूर्जः* यज्ञाबृहति ऊर्जोनपातमित्यनाभावः पूर्वे सन्ध्यगीते *अयंपूषा बृहतिगावः* अयंपुषाद्वितीयायां गात्रोपदाइत्यनाभावः । अत्र संध्यगीतं न विद्यते गा २ वो ३३३ *श्येनोऽयः सिष्ठे* तृतीयादिन्यामेव असाविसोमतृचेश्येनोनयोनिमन्त्योनसृष्ट इत्यनाभावः । अत्र संध्यगीत न विद्यते अनः । *श्रृपोचायास्ये श्रृपो२२२

३४ औहोवा इन्दोच' स्वः पृष्ठंदो ३४ औहो उ· वर्णं तु न' सर्वत्राभवति ग्रहणदाभवतींडुस्त्रिकृहति शिशुंसर्वत्र ॥ ३ ॥

एकारोन्तः पदिको ग्रहणादाभवति नमो घोष्यं· चाग्नायिनमा २३४ औहोवातो मा २१४ औहोवा सालव्यं च द्वितीयात्कृष्टं तालव्यंह्यायिशब्दश्चाभ· वत्योस्तोभेप्रथमादौप्रत्यये श्रिया ३ उं २३४ वाहा

औहोवा* त्रिणिधनायास्ये मृश्यमानांद्वितीयायां मगीनमुदाहृतम् *इन्दो च स्वः पृष्ठंदो २३३ औहो* तवाहयंसोमाद्यायां स्वःपृष्ठः मगीतं एव उदाहृतं *उवर्णतु न सर्वत्राभवतिग्रहणा· दाभवति* । तृतीयादिम्यामेव न सर्वत्र उवर्णमाभवति । ग्रह· णादाभवति वक्ष्यमाणेषु *इंदुंस्त्रिकृहति* त्रिकृदृहति सत्य इन्दु· रिति आभावः । *शिशुंसर्वत्र* शिशुंजज्ञानमिति तृतीया· दिन्यां सर्वत्राभवति वासिष्ठादिषु ।

इति पुष्पसूत्रभाष्ये अष्टमस्य तृतीया कण्डिका ॥

*ऽकारोऽन्तः पदिकोग्रहणादाभवति नमोघोष्यंचाग्ना ३ यि नमा ३४२ आहो २ वा २ तोवधा ३४ औहो २ वा ३ ऊध्यवं *तृतीयादिन्यामेवाधिकारात् ऽकारोन्तः पदिको· ग्रहणादाभवति । वन्दध्याअग्निनमोभिः । स्यात्वावतोमघोन इति च वारवंतीये तालव्यं च तृतीयादिन्यामेव । यथा तन्तेमदायां· स्वयोः हरिश्रियमिति । उपप्यीस्योजयादिवेदिवे तथा श्रुधी· हवोत्ययोंश्च किंअन्मनसंधिषुकृण्वस्यपुस्येति न *द्वितीयात्कृष्टं तालव्यंहाइशब्दश्चाभवयोस्तोभे प्रथमादौ प्रत्यये श्रिया ३३ उ ३२२ या ३ हा ३ ऊ २२ या २२ ऊहा ३२ या

२ उँ ३ हा ३ उँ २ हा ३ हाथिस्वासुनकारः आय-
तीयेदानाया २ वोक्षुदया ३ उँ २३४ वाशुकारम-
कारौचवृष्णि त्सिवास्वरऍसर्वमाभवतियास्तोभेप्र-
त्ययेचचश्चनादभन्नित्येवंजानीयानि मायिते वचा २
या २३५ औहोवा यानादमा ३ या २३४ औहोवा
और्णायवयोस्त्वोभवतिकाचिक्रतौ २ या २३५ औहो

---

द्वितीयाव स्वरात कृष्टं तालव्यं हाइशब्दश्चाभवत्योस्तोभे प्रथमादौ
प्रत्यये तदुदाहृतं । प्रवाय आदैवोदामे । यौताने च । अत्र च
यौतानेउपोपुअभेदयागिदिनिपादवर्गसंज्ञायिनिद्विकौधिकतः ऋाचे
नित्यं सोमेलियोपु उपोपु जाहोहा ३ हा उहो १२ भेतुवेच-
ऊवहऊभे दधात् अक्षरायव इति वचनात् । अक्षरात् प्रकृतोव
वभेभवत इति मदुक्तंभवतीति *स्वासुनकारः श्रयेतीयदानायं-
३ ३ वो २ हुं ३ दया २२ ऊ १२२ वाऽस्वासुश्राय-
त्तीये स्तोभप्रत्ययस्य नकारस्य लोपः । मनोदानायचोदय-
न्निति *शुकारमकारौ च वृष्णि* तस्मिन्वृष्णिशुकारमकारौ-
ऊस्तोभप्रत्ययोआभवतः । इन्तिवृत्राणिदाशुषकारं अभिमवः
सुरायनमिति । *स्विवास्स्वरऍसर्वमाभवति यास्तोभे प्रत्यये
वचश्चनादभाक्तित्येवजानीयानि मा ३३ यितेवचा २२ या २२
२२ औ २ हो २ वावा २ ना २ दमा २२ या २३२२ औ २
हो २ वा*त्मिवास्वरऍसर्वमाभवति यास्तोभे प्रत्यये तदुदाहृतं
स्वमङ्गप्रशऍमायां त्रैककुभे *और्णायवयोस्त्वोभवतिकाचिक्रतो २२
या २३३३ अ २ हो वा क्रतान्त्वो २२ या २२२२ औहो
२ वा ३ पनिष्टयो २ या २३३३ औहोवा* और्णायवयोस्तु-
त्सिवास्स्वरः या स्तोभे प्रत्यये आभावयासुओभवति । तदुदाहृतम् ।

वाङ्गतावृधो २ वा ११४ औहोवायनिष्टपो २ वा २३४ औहोवा चरेवारेहत्याँ ॐ सर्वॐश्रुधीहवायां स्तोतृभ्यश्चौ कारांतः पदिको ग्रहणादाभवत्येकारेहकारयोः प्रत्ययोः कावयामवाम्रसोमसामसुनामनृता ऽ२ इयमधिराए ५ दुरितासा २३ ए३ सुपाहो २ इव साहो २ यायेनो नया २३ हा अध्रिगवित्यत्राचत्वमौकारेमस्ययेरयिष्ठे ऽवृद्धॐसर्वमाभवत्यौहो-

---

*चरे वारेहत्या* वारवन्तीये यूद्दत्यां चरेसंघातविषयं ओमवति च रक्षैरोके । चराजाता २२२ हा ३ ई उदाहरणानि यज्ञायज्ञायां इराचदक्षसोहावि । तथावनामयमायां ऊर्जोनपातमाहुवोहावि *सर्वॐश्रुधीहवायांॐस्तोतृभ्यश्च* श्रुधीहवायां चावृहत्यामपि चरसंघातविषयस्योभावः इन्द्रयस्त्वासवर्यतो ३ इन्द्रा २२ हावृस्तोतृभ्यश्च स्तोव ३ भ्यो ३२ ३३ हा ३ यि *आकारोन्तः पदिकोग्रहणादाभवत्योकारहकारयोः प्रत्ययोः कावयावनाम्रसोममामसुनाय ३ नृता ३३ इयमधिरायं २३ दुरिता ३ सा २१ प ३२ णक्षुपा २ हो यि २३ वस्सा ३ हो ३२ इयेनोया ३ हो* पूर्वलक्षणमेवाधिक्रियते । आभावमासङ्गिकानां पादद्वचनत्वात् ओकारः सन् अन्तः पदिकग्रहणादाभवत्येकारहकारयोः प्रत्ययोः तदुदाहृतं पदेकावे पदेयामे च आमिमिथाणि अमानिसोमयोः । वाम्रे परीतोण्यां अध्वर्दंडे च सोमसाम्नि अमावप स्तुम्यदायां *अध्रिगविस्यत्रात्वमौकारे प्रत्यये रयिष्ठे* स्यापत्युम्ने ते अध्रिगो इत्यत्र अकारेमत्यये आभावोरयिष्ट *अवृद्धॐसर्वमाभवत्सोहोस्त्राभिसस्वरेमत्यये रेवतीनाम्ं २ हांमाणानिकाऔहो २ मा ओहो २* अवृद्धॐसर्वमाभव-

रनीचायायां प्रत्ययेप्रत्यये ॥ ५ ॥

ऊहगानेयोनिवत्स्वराः स्तोभाभ्यासविरामा अ-

---

पांदकं च । ओनायामनंतरस्वरनीचायायांप्रत्ययभूतायामिति ।

इति अष्टमस्य चतुर्थी कण्डिका ॥

---

उपाध्यायाजातशत्रुकृतौ मात्राभावः समाप्तः ।

*ऊहगाने योनिवत्स्वराः स्तोभाभ्यासविरामाः* कोऽस्याभिसम्बन्धः । उच्यते । ताळव्यमापि इत्येतस्मिन्सूत्रे उक्तमेतत् । ऊहगाने योनिवत्स्वरा इत्येनत्पूर्वं वक्तव्यं प्रकृतिमापद्य विकारवचनंयुक्तमिति तत्र च प्रतिहार उक्तः यथा अग्निष्टोमप्रकरणे प्रथमं गायत्रं साम भवति तत्रास्यानधिकार उक्तः । ऊहशास्त्रानुसारित्वात् । ततोऽनन्तरमामहीयवं भवति । तत्र च ताळव्यस्य विकारोद्दृष्टः । उच्चातापि इति उक्तं तेन प्रसङ्गेन ताळव्यमाइत्युक्तं । तेन प्रसङ्गेन सर्व एव मात्रा अनुपरिक्रान्ताः आमात्रान्ताः । इदानीं विकारा वक्तव्याः इत्यत आह । ऊहगाने योनिवत्स्वरा भवन्ति इति प्रकृत्यापदेन कृतं ऊहगीतौ योनिवत्स्वराः क्रुष्टादयः । स्तोभाश्च तद्दशा भवन्ति अभ्यासाश्च तादृशा एव भवन्ति । विरामश्च पर्वाणि प्रकृतिवद्भवन्ति । योन्यापादनं विकारार्थमित्युक्तम । स्वरस्तोभाभ्यासविरामा इति वक्तव्ये विसमासः प्रकृतिपर्वनियमार्थं, अन्यसंघातोद्देशोपि प्रकृतिवद्विरामः स्यादिति । यथाकर्तृगेतन्त्वादेशः *अनभ्यासस्तुतछन्दसम्* योनिवदभ्यासे प्राप्ते अपवादः । योनौ यान्यभ्यासेनार्थछंदः संपद्यन्ते गौरीवितादीनि तानि पदान्तछन्दः अनभ्यासेनापन्नं तस्मिन्पदाछन्दसि चोद्यते । अनभ्यासेनापन्नं तदाऽनाभ्यासः । गौरीविती-

---

दलकौत्सनैरुकुभवैखानसादिषु । वैतहव्यौर्ध्वसद्मनाष्टादंष्ट्राणामयोनौ नाभ्यासः वैतहव्ये उत्तरयोः । और्ध्वसद्मने सर्वत्र । अयोनौ आष्टादंष्ट्रे आत्वात्रिशंत्विति । एतेषु पूर्वनियमादभ्यासः । प्रकृतिपूर्वनियमार्थं अप्रकृतादेरपि प्रकृतिः । आनुष्टुभीरात्रिरिति वषडन्ते इन्द्राणायां स्वासुवत् । अक्षरपरिमाणनियमार्थं पञ्चसप्तानि चत्वारि सहस्राणि च पञ्च ज्योतिष्टोमे अग्निष्टोमाते संपद तस्मादभ्याम एव योनावैतद्वैतनीषसापेक्षया *विकारा हि प्रत्यक्षपरोक्षादयः* । ते च आयिभावादयः । योनिव्यपेतंपञ्चानं सविकारः प्रत्यक्षप्रकृतिः *तेषामुक्तोनियमः* तेषामायिभावादीनां विकाराणामुक्तंलक्षणं । नियम उच्यते । योनिवद्भावउक्तः । अनंतरं चापवादः कृतः । अनभ्यासस्तुतच्छन्दसामिति तेन प्रसङ्गेन इदमुच्यते । क्वचित्प्रकृतिवद्भावः । क्वचिदायिभावः । क्वचिद्वाभावः । क्वचिल्लोपः । एवंलक्षणोऽनियमः । क्वचिदन्यदेव यथाऽहोमया इति । दैवोदासे इति । क्वचिदटद्दस्यं व्यायिभावः । यथाईशाणन्त्वर इति । ते च किंरूपा विकारा ये प्रक्रान्ता इति । उच्यते ।

आमितं प्रकृतिं चैव ऊर्द्धं चाच्छद्मेव च ।
गतागतं च स्तोभानां मुच्चनीचं तथैव च ॥
सन्धिनरपदवद्धानमप्त्वमायान्निमेव च ।
संकृष्टं च विकृष्टं च व्यजनं लुप्तमाहृतम ॥
आभावाश्च विकाराश्च भावाअष्टादश स्मृताः ॥

तेषां भावानां सप्तदश साधिताः । अतः परं विकारान् साधयिष्यामः *अतो अन्ये नियमाश्रयाः पर्वाश्रयाश्च* अ

स्कोनियमोतोऽन्येनियमाश्रयाः पर्वाश्रयाश्च तेषानि॰

---

एभ्योविकारेभ्यः येऽन्ये विकारास्ते द्विविधा भवन्ति नियमाश्रयाः । पर्वाश्रयाश्च वक्ष्यमाणाः । तदेतस्मातिशास्त्रं अधिकारार्थमित्यर्थः । तेषां नियमाश्रयाः पूर्वं वर्तिष्यंते *तेषां नियमाश्रयाणां* पूर्वं लक्षणं वक्ष्याम इत्यर्थः । नियमेनानामपूर्वलक्षणोभेदः । एकरूपमित्यर्थः । आयिचादीनां भेददर्शनादुक्तं *यथैतच्चतुर्थमंद्रातिस्वार्याणांस्वराणां ह्यंतरमुच्चमुच्चमुदूहः *यथैतच्चतुर्थमंद्रातिस्वार्याणां स्वराणां चतुर्थस्य प्रथमोऽन्तरः । मंद्रस्यद्वितीयः अतिस्वार्यस्य तृतीय इति । तदेतस्यांहितपूर्वनिस्तमात्स्वरानुदूहंनित्युसिद्धन्वात् । चतुर्थोदात्तवर्यस्वराद्यन्तरानुदूहंतिमात्युवर्द्धावःसमानपुरुषवचने तृतीयप्रभृतीनामुदात्ततमः कश्चित्स्वरो भवति तमुदूह इत्याचक्षते । तथा च यज्ञे क्रियत इति । वाराहवारतप्रमरायादिषुतमुदूहारंभः कस्मादिति कथं च पुनारंभ इति । उच्यते विभाग्यत्वात् एतेषां सस्तोभाः पादाः प्रतिकर्तृभवंति । ते च पादा गीतिः कर्त्तव्या भवति । ते च समानपुरुषवचने तृतीयप्रभृतीनां अन्यतमः स्वरो भवति । तस्मादुदूहाभावः । तत्र मुच्यते । अत्र आरण्यगेयसामान्याद्र्धंतरस्तोभाप्ययो-. ग्यताभावात् उदूहप्रवृत्तिः । वराहे च वाशब्दस्य कर्षणप्रवृत्तिरेव । धर्म्यविधर्म्मणोरायस्तोभस्याभ्युदूहप्रवृत्तिरेव अन्यथा पश्चात्स्वरास्तोभविभाग्ये धर्म्यविधर्म्मणी इत्येतस्मिन्पक्षे आद्यस्य स्तोभस्याभ्युदूहेन प्राप्नोति । अतः अभ्युदूहारंभोवाराहादिषु । दीर्घकर्षणस्य वृद्धिः योनिवद्भावे प्राप्ते प्रतिषेधः । ऊहगीतौ तालव्यादेर्म्यइत्याधिकृत्यचित्रधंरायो ज्येष्ठप्रसर्वशंपद्यप्रमिति । तदूहे तु श्रायंतीये यज्ञायज्ञीयनैयातिथसौमित्रादिषु । दीर्घकर्षणेष्वान्तकर्षणानीति च

नित्यमोरवं गौपूक्तेतूचातायामूने पाशब्दाभ्यासात् सम्प्राप्तिः क्रौञ्चे च हि शब्दाभ्यासा द्वर्त्ते चैकाराभ्यासात् साद्दीयगर्द्दपुत्रेषु चातः परं पर्वविकारान्वक्ष्यामो

---

इत्यत्र यकाराभ्यासः । सानित्यइति निधने च नित्यमोरवं सिद्धग्रहणं वैकृतस्वाल्लक्षणान्तरपरामर्शार्थम् । भेयोपडद्धइति, *गौपूक्तेतूचातायामूनेपाशब्दाभ्यासात्संप्राप्तिः* गोपूक्तेतुऊनेपादेपुत्राणि मानुषाणामिति पाशब्दाभ्यासात्स्वरसंप्राप्तिः संप्राप्तिवचनाच्च अन्यत्राप्यूनेपादे पूरणार्थमभ्यासः स्यात् । यथामेत्त्विणिधनेअक्षारिति *क्रौंचे च हिशब्दाभ्यासात्* क्रौंचे च पेन्यादिहरिभिरिति हिशब्दाभ्यासात् स्वरसम्प्राप्तिः । *वर्त्ते चैकाराभ्यासात्* । अभीवर्त्ते च स्वर्विदपश्चाअभीति अन्त्यायां इकाराभ्यासात्स्वरसंप्राप्तिः शरणाः वहन्द्रोतिः । *मादीये अग्नेत्वं-नोअन्तमद्धित्रायायां सुमवमो रयिदा इतिमूर्ध्न्येतदेवोदाहरणं । उद्गुंअग्रपुत्रेअस्तोभतिश्रितोयुवासात् । *अतः परंपर्वविकारान्वक्ष्यामः । *अथपर्वाश्रया इतिपर्वाविकाराद्. पुनः पर्वग्रहणं । किमर्थमित्यर्थः । उच्यते पूर्वत्र पर्वैकादशस्याधिकार इत्यत्र कृत्स्नस्य पर्वविकारोवक्ष्यत इति कृत्स्नपर्वविकारार्थपुनर्ग्रहणं *यदधिकृत-स्वरतः पर्वतद्यथायोनि* ऊहगीतौ यदधिकृतं योनिवत्स्वरतो भवति । तस्ययोनिवद्गानेयत्लक्षणं तत्तथैव भवतीत्यर्थः । यथायोनीनीति सिद्धग्रहणं । क्वचिदुत्पाचपर्वोपसंग्रहार्थं यथा आदितो लोप इतिनैतत्सर्वत्रेति ज्ञापनार्थं यथा स्वास्वा यद्गीयवे चोत्तमायां तृतीयं पर्वरूपातुत्वात्पूर्वोक्तेन न्यायेनआदितोलोपे कृतेतुत्रयाणामिति प्राप्नोति अत्रतु तृतीयाक्षरस्य लोपस्तुचा आदियोनिरप्युक्तः । यथा देवाविधेयत्वायेस्तोपदाविमयमोचेमयमाक्षरस्यवृद्धिः कृता ।

यदधिकृतᳫंस्वरतः पर्वं तद्यथायोनि स्वरविकाराद्य-
दन्यत्पर्वोपपद्यते तत्तेनैवोपदेक्ष्याम आमहीयवमध्यमा-
यामुग्रᳫंशर्मारिरिमाताᳫंस्वासु क्रमश्चोत्तरयोरेभिर्वं-
द्धोमवइन्द्रा मायः पुमध्यमायां तु मरामऽग्निष्टुन्नोध-
सेध्यमायां मागायातां धाजात्स्वरोत्पत्तिश्च प्राक्प्र-
हूयसायाः श्यैतधसतृतीयायां चाऽनुष्टुप्सु वायिश्ये-

---

उत्तरयोस्तु प्रथमोऽभ्यास एव कृतः स्वरत्वादिति ।
*स्वरविकाराद्यदन्यत्पर्वोपपद्यते तत्तेनैवोपदेक्ष्यामः* उक्तमतः परं
पर्वविकारानिति । तत्र पर्वग्रहणं कृत्स्नपर्वविकारार्थमित्युक्तम् ।
तत्र स्वरविकाराद्यदन्यत्पर्वादेशादित्यर्थः । तत्र यद्वैकारिक पर्वो-
पदेक्ष्यत उत्तरत्र तेनैव वैकारिकपर्वाणि उच्चारयिष्यामः ॥ *आ-
महीयवमध्यमायामुग्रᳫंशर्मारिरिमाताᳫंस्वासु* । स्वास्वामहीयवम-
ध्यमायामुग्र ᳫंशर्मारिरिमाता ᳫंस्वासु । स्वास्वामहीयवमध्यमाया-
मुग्रᳫंशर्मारिरिमाता मापद्यतेरारमारता २ गारं स्वासु क्रमश्चोत्तरयोरे-
भिर्वंद्धोमवइन्द्रा* । स्वासु स्वारसाक्रमेण उत्तरयोरेभिर्वंद्धोमवइन्द्रा-
मापद्यते । मवइन्द्रामवइन्द्रायमादनं इति द्वितीये साम्नि । *आयः
पुमध्यमायान्तुमराम* आयः पुमध्यमायान्तु साक्रमश्चेणाभर्वद्धो-
मरामापद्यते । यजा ३२ इष्टो २ आ ३२ इतित्वाहᳫं सो-
मपथमेमरा । *अग्निष्टुन्नोधसेध्यमायां मागायतांधाजात्स्वरोत्प-
त्तिश्चप्राक्प्रहूयसायाः* । अग्निष्टुन्तु नोधसे अग्रआयाहीत
मध्यमायां मागायता आंधामापद्यते । योनौ मागायतापसरा
आसीदता १ गा २ ५ १ २ ३ १ इत्यस्य रूपमापद्यते । धात्संज्ञ-
इति । स इह आंधीभवति । अमानिर्देशायां आंध्यस्वरः । हाइत्वा
सह । अस्वरोत्पत्तिश्च प्राक्प्रहूयमायाः । सूहोम । *श्यैतधसतृ-

सातयां कावे स्वासु भिशब्दादकारागमउदपसायां च पाशब्दे च नित्यमोत्वं पौरुहन्मने स्तोत्रामागायतां जास्वरोत्पाचिश्च प्राकृतरूतायाः ॥ ५ ॥

---

तीयायां च॰ श्यैतनौधसतृतीयायां चागागायता ओधामापद्यते । जास्वरोत्पत्तिश्च प्राकृतहूयसायाः गाइतरे आ २ इत्यपरसाः । २ आ २ एपजास्वरः । ॰अनुष्टुप्सु रापिश्यैतायां ॰पुरोजित्याद्यांत्य- योः नौधमेवाविश्यैता तथामापद्यते । योनौ वात्सम एषा श्यक्षरा मागायतास्वसाराइएषावाइश्यैताद्विपर्व्वा पुरोजिसाद्यांतयोस्तु मागा- यतालोपः । आ ३ या. १ एषा आ २२ इन्द्राश्वानां २ एपावा- इश्यैतात्वद्विपर्व्वाणांयोनिधनेन । अनुष्टुप्स्वितिबहुवचनं ककुप्सुचेति । यथा नौधसस्यपद्ककुभइति अम । ॰कावे स्वासुभिशब्दाद- कारागमउदपसायां च पाशब्दे च नित्यमोत्वम्॰ । स्वासु कावेभि- शब्दादकारागमोभवति । अभिआएवं स्थिते इकारस्यान्तस्थापत्तिः । अभ्यएवंस्थिते पाशब्दे च नित्यमोत्वमिति । अभ्यो २ वाएतद्रूपं सिद्ध्यति इतरथा औत्वोकारयोरेकीभावे लोप इतिअभोवेतिमाप्नोति यथा भगेगोराजाइत्यत्रअमोचेतिगीतिः । अत्र कथं ऋकारागमत्वा- दिकारस्य अन्तस्थापत्तिः(ज्या)क्रियते इति । उच्यते । उपसर्गाभावात् एवं हि स्यात्पौदग्राजः । नाम्यन्तादुपसर्गादेचेत्येकारः । पर्वगित्य- भिन्द्रमहावैश्वानरवनपो श्येतिनित्यमोत्वमिति नित्यग्रहणं लक्षणान्त- रमदर्शनार्थमेषांपेद्युइति । ज्यो २ मो २ गा २ नुचस्य नित्यग्रहण- म् । ॰पौरुहन्मनेस्तोत्रायागायताजास्वरोत्पत्तिश्चप्राकृतरूतायाः॰ । पौरुहन्मने अभिसोमादिषु स्तोत्रायोनिदृष्टा मागायतामापद्यते । स्तोत्राकदात्वमोइत्यत्रयोराजायान्तु मागायन्तवाइजास: । एषास्तो- त्रे सर्वत्रुद्धेरयर्थः । मागायता आदिष्टदा । मागायता आदिर्वद्धेत इत्य-

पृङ्क्तिनि तृतीयपदान्ते च दक्षसापतिः कर्वीं पृतारूतद्विपां पतिः कव्युत्तमे च जमदग्नेर्ध्यमायां रनोनुमाच दक्षसां पुत्रउत्तरयोर्नेमिस्त्वना पशस्युत्तमायामुत्तरा तथा नन्दाभयं दासोत्तरयोर्जरिस-

---

र्पः। गायत्रोत्पत्तिश्चभाक्तव्याः। अभिसोमादिषु वा इति॥

इति अष्टमस्य पञ्चमी कण्डिका।

---

*पृङ्क्तिनि तृतीयपदान्ते च दक्षसापतिः कर्वीम्* । पर्वविकारान्वक्ष्यामः इति प्रतिज्ञातम् । तत्र केचिदुक्ताः अवशिष्यन्ते तान्वक्ष्यामः, पृङ्क्तिनियोराजादिषु तृतीयपादान्ते योनिदृष्टा दक्षसा ऊहगीतौ पतिः कवीमापद्यते । *पृताऊतद्विपां* योराजायायां तृतीयपादान्ते च दक्षसा ऊतद्विपामापद्यते पृतनाभिरयत्र *पतिः कव्युत्तमे च* उत्तमे च पादे योनिदृष्टा पतिः कवीः ऊहगीतौ सर्वत्र ऊताद्विपामापद्यते । रेतस्यायेति पतिः कवीः । *जमदग्नेर्ध्यमायां रनोनुमाचदक्षसा* जमदग्नेरभिवर्तं मध्यमायां स्तोत्रीयायां रनोनुमा च दक्षसामापद्यते सुमतीवारनोनुमाअभिस्वाहूरमथमे । *पुत्रउत्तरयोर्नेमिस्त्वसा* । उद्दर्षयुत्र उत्तरयोः स्तोत्रीययोः नेमीतिनेमिश्चक्रमिवाभवत् । आगोमतिव्रजभजोत्वमस्त्वसामापद्यते । त्वसा १२ नुवा २ नाहाइपिथ्याऽहोवाईवासुवाद । *पशव्युत्तमायामुत्तरा तथा नन्दा* । इन्द्रस्य पशव्युत्तमायां उत्तरा द्वितीया तथा नन्दावापद्यते । *भयन्दासोत्तरयोर्जरिसङ्गानं* विधीयते अग्ने जरितर्विश्पतिरिति अयं दासोत्तरयोः जरिनङ्गानं, रायिर्देवोदासे उत्तरयोः स्तोत्रीययोः

योश्च दक्षसोतद्विपामतऽंहि मद्रे प्रथमोच्चस्य चतुरक्षरमाद्यं पिपासोमाम्परं योनिवत् पाष्ठौहोत्तरयो॰

---

*त्रिछन्दाःसु वैराजपर्भारिष्टयोः* त्रिछन्दाःसु वैराजपर्षे तचाहऽंमोपपुरोजसोः अरिष्टे सुतासोपायां इदऽंसद्वातः । जुहसद्वातमापद्यते सुरूपकृत्नुतृतीये जुहसंघातः सर्वाभाहत्रीणे अरिष्टं भवतः । योनिवदेव जाता भवति नकृतिग्रहणात् । अरिष्टे सत्ते । इतरथा यदि मर्वा अधिकृतैव स्यात् । तथा सति सखेन्द्रस्या एवं सति रेवधान्दस्य पत्रशब्दहाद्धिनं स्यात् । तस्मादेतस्मात् शाणकान्न सर्वा यथा नकृतिरैवेतिसिद्धं । *वाद्यध्यमयादयोश्च दक्षसेतद्विपो *वाचे कर्ण्वेदोचसादिषु योनिवत्ता च दक्षसा गीयते । या च दक्षसा तद्विपामाप्यते । एवं तयोश्च दक्षसोतद्विपयोः । आदावाचापेभवति । कथं विकार इति । उच्यते । पदक्षमाया अत्पात् तृतीयं दीर्घमक्षरंमत्युत्क्रामति हृस्वस्तु अन्ताद्वितीयमभिनीयते कृष्यते वा पूर्ववत् । सर्वोतद्विपेभ्यश्च पुराकृतमक्षरं च दक्षसा संहन्यत इति । पुरुनायरथा १ दाधाहनाकिष्वानियमद्दासुता ३२ मामा ३ इति एवं उहभ्यमद्दावाचायस्त्वादेत्युक्तं । *मवपूर्हि *उभयोर्हि द्वितीयायां रिकारमतिनेयः । तऽंहित्वता २ जंटपभन्ता ३ यो ३१ जा १ हा २२ सेदसासे यभन्यातृतीयस्य मत्युत्क्रान्तत्वात् । *मद्रेप्रथमोघस्य चतुरक्षरमाद्यं पिपासोमाम्परं योनिवत्* । पौरुमद्रे अभिसोमापुनानयोः प्रथमोचस्य चतुरक्षरमाद्यं पिपासोमारमापद्यते एवन्ते १ मा २२ अो २ वसा ३२ योनौनुभयानोद । परं योनिवमद्भवति यदसरसादत । इयंमद्दीमिति । *पाष्ठौहोत्तरयोर्द्वयोर्वाहितिरि* पाष्ठौहेउंणद्विपंयोनी पर्येभेदं फलागातेमिममेकनिधनेषइति

घृण्योतद्विविद्वौ प्रमंहिद्वितीयायां वाथ्याङ्गीयोदेशां ताद्विविद्वावृणीमहां वात्सप्रेवृधंतादेः कर्षणप्राप्तस्या- कर्षणमूत एकाचद्वितीय मभ्यासश्च क्षौद्रे तु घृणी- प्रथममपुरोज्यूतएकायाश्च ध्यक्षरंसाभ्यासं मानव-

---

द्वितीया उत्तरयोः स्तोत्रीययोः उत्तरयोर्घृणीताद्विविद्वामापद्यते । एव द्विवचनं द्रष्टव्यं द्वितीयायां स्वमातरमिति तृतीयामन्त्रिश्च- ता इति । *प्रमंहि द्वितीयायां वाथ्याङ्गीयोदेशां*प्रमंहि- द्वीयद्वितीयायां स्तोत्रीयायां वाथ्याङ्गीस्त्र्यक्षरा योनिदृष्टा योद्दे- शामापद्यतेतत्रसन्नर्णमित्यत्र । *ताद्विविद्वावृणीमहां* । प्रमंहि- द्वीयायाद्वितीयाया योनिदृष्टा ताद्विविद्वावृणीमहामापद्यते । वृहेन श्रूयाताद्विविद्वाद्वितीयायां प्रथाइतिवृणीमहा । *वात्सप्रेवृध- न्तादेः कर्षणप्राप्तस्याकर्षणम्* त्रैष्टुभोवात्सप्रे सोमः पवतायां वृधन्तादेःपर्वणः वृधन्ताआदौ यस्य पर्वणः तद्वृधन्तादिपर्व वृध- न्तादपरस्येत्यर्थः । तच्चपर्वकांयातस्यकाभ्यास्यात्कर्षणप्राप्तिः । तस्य कर्षणप्रतिषेधः । *ऊनएका च द्वितीयं* तस्मिन्नेव वात्सप्रे ऊन एकाद्वितीयस्वरमापद्यते । *अभ्यासश्च क्षौद्रे तु घृणिप्रथमं *क्षौद्रे वात्सप्रे पुरोजित्यां प्रथमं सैव वृधन्ता सैव घृणी सा प्रथमं स्वरमा- पद्यते । *अपुरोजि*तस्मिन्नेव क्षौद्रे पुरोजितीत्यत्र या घृणी तस्याः द्वितीयस्वरस्याप्राप्तिर्भवति । *ऊनएकायाश्च त्र्यक्षरंनाभ्यासं* प्रथमस्वरमापद्यते घृणीतो २ एतदक्षरांऊनएकाया आद्यमिति । आद्यत्वात् द्वितीयस्य स्वरत्वमेव भवति । अन्यमइतिद्व्यक्षराभ्यासः प्रथमं स्वरमापद्यते *मानवयोः पूर्वेनदक्षसायाति : कर्षी* पूर्वे च मानवे द्वितीये पादेद्वितीये चदक्षसा यतिः कर्षीमापद्यते । स्वा ३ दक्षा ३२३ इति । प १ वा २ इः १ का ३२ चा २३: इयेन

ह्वाने कार्णश्रवसोत्तरयोर्नुपेजनासदाधृद्धौ मार्गीयवे मागायतप्रथमोच्चं प्रस्तोमप्रथमायामस्यप्रलाद्ययोश्च धृपाजिगप्रथमायां च घृतनिधनेछतानुवमित्यत्र स्वरागमोह्वयि वर्षंशब्दस्य चोद्धाव ।' इदं सङ्घातत्रिष्टु-

---

पर्वविकारं अधिकपर्वत्वात् जरितसङ्घातमापद्यते जरितसङ्घातस्य द्वितीयं पर्वं द्यावोरिति ऊहगीतौ जना ३ नपा ३ त अस्पविधानार्थं गमित्वमहाइ इति अभ्यासविषये *कार्णश्रवसोत्तरयोर्नुपेजनासदाधृथौ* कार्णश्रवसोत्तरयोः नुपेजनासदास्तोत्रीययोः नुपेजना सदाद्द्धामापद्यते । दोमतिभाऽभ्योवधुभाइति । *मार्गीयवेमागायतप्रथमोच्चं प्रस्तोमप्रथमायामस्य प्रलाद्ययोश्च* । मार्गीयव द्वितीयपादादौ मागायता प्रथमोच्चमापद्यते । कस्मिन्विषये ? उच्यते । प्रस्तोमप्रथमायोर्मध्यानयइति । अन्य प्रलाद्ययोश्च युञ्जदुद्वे । अव पंभरा पंभीतिच । *दृपाजिगप्रथमायां च* । दृपापवस्वेति च आजिगे प्रथमायां मागायता प्रथमोच्चमापद्यते । महस्वते इति पर्वेषु च ऋत्स्वरहीतित्वात्प्रथमोच्चता । *घृतनिधनेछतानुवमित्यत्रस्वरागमोह्वयि* घृतनिधने इदं ह्वानुद्वितीयायां छतानुवमित्यत्र कथं न प्राप्नोति । छतानुवाइति वमित्यत्र कथं ? उच्यते । ओवीकारयोरेकीभावात् । तेनात्र आकारस्वरआगमो भवति । हविहो शब्दे मत्यये । ओवईति ओभावः । अर्वाङ् घृतनिधनेछतावनुवमितिस्वरागम इति वक्तव्ये अत्रेति अन्यत्रापि स्वरागमं दर्शयति । अग्निं शिशुदेव्ययोरिति । अग्निरतृतीयायां परयीहो ३ वं तीहो इति प्राप्ते तथा शिशुप्रथमायां पत्यौहो इति पत्यौहो इति प्राप्ते स्यौहो इत्युक्तम् । *वर्षंशब्दस्योद्भावः* । वर्षंशब्दस्य उच्चीभावः । इतरथा स्वारितस्त्रा

प्सुपार्थवाराहवासिष्ठकुत्सरथीयादिषु वाराहे शुचिः वाघृधन्तात्तरुतां पार्थे तु वृण्वादेर्हीपी प्रकृता वूहेद्वितीय मनुष्टुप्सुत्थृभुसङ्घात माज्यदोहयोतानयोर्जुहूसङ्घात चिछन्दःसु च वैराजर्षभारिष्टगो वाँशेध्यमपाद-

---

न्निपातः प्रागृडितिछतानुवर्गाणि च । *इदंॐसङ्घातास्त्रिष्टुप्सु पार्थवाराहवासिष्ठकुत्सरथीयादिषु* । त्रिष्टुभि पार्थादिषु इदंॐ सङ्घातः प्रकृत्या भवति । अधिकारात् । त्रिष्टुब्ग्रहणान्देशः । इदंॐसङ्घातान्तात्रिधेतिविशेषविवक्षया सिद्धोपन्यासः । दृषन्ता । कार्ष्या । जतयकोरेति इदं ॐसङ्घातः । *वाराहे शुचि वाघृधन्तातरुतां* । वाराहे शुचिवाघृधन्तातरुतापापद्यते । *पार्थेतु वृण्वाद्येहीपीप्रकृतौ* । पार्थे तु वृण्वाद्ये अक्षरे योनौ सुष्वाणास इति हीपीमापद्यते । प्रकृतौ योनावित्यर्थः । *ऊहे द्वितीयं* । ऊहगीतौ तअक्षरे द्वितीयं स्वरमापद्यते । वृपाशोणादिषु । *अनुष्टुप्पृभुसष्टुप्सुत्स्थुसंघातं* । अनुप्रदावावायो भवति । कथं विकार इति ? उच्यते । चक्षसाया अन्त्यात् तृतीयं दीर्घमक्षरमत्युत्क्रामति हस्वस्तु अधीनायमभिगीयते । कृष्प वा पुर्नवत् । सर्वोताद्वेप्भ्यश्च पुराचम्यत्ततं च दक्षसा संहन्यत इति । पुरुत्राधस्था २ दाधाइनकिष्टान्नियमद्रासुना २ इगाया ३ इति एनंद्रष्टव्यम्प्रदात्रावीपर्षादिरयुक्त । अन्ताहि उभयाहि द्वितीया चतुर्थ्यावि-कारप्रतिषेधः । तॐहिस्वरा २ जंत्रयमन्वा २ मा° २२ ष्टुप्सुपस्त्ववाजसातयायेसिसङ्घातमापद्यते । तयेक्षसंघातमापद्यते । इन्द्रइपेददातुनइतिप्रथपेसभुक्षणां । *आज्यदोहयौतानयोर्जुहूसङ्घात* । आज्यदोहयौतानयोः इदं सङ्घातः जुहूसङ्घातमापद्यते । आज्यदोहप्रसुन्वानायां यौताने अथाहीद्रउत्सोदेवयोः ।

यो: पूर्वं च दक्षसापतिः फवींऽशुमंदाचैकर्चेलुप्तोपां-त्यो उत्तरेचैतस्यामेवान्यत्रशुर्मदायाः पूर्वस्याउपांत्यं नीचं न्यङ्क्ष्वग्रीसाम्नोश्च दक्षसापतिः फवींऽर-न्धोत्तरेशुर्मदोत्तररयोजातः पृछां ॥ ६ ॥

---

मापद्यते च दक्षसापर्वंतृतीयेपादेउपान्त्यं परपर्वसाशुर्म्मंदा । एवं-स्थिते ब्रवीति । ऊहगीतौचदक्षसापतिः फवीमापद्यते शाकपत्त्रादिषु *शुर्म्मंदाध्येकर्चे लुप्तोपान्त्ये:* एकर्चेपुंस्मानत्वे मन्द्रायोतवा-शुर्म्मंदाव्याख्याता । तस्याः उपान्त्यमुत्तरलुप्यते । आदिलोपे-प्राप्तेउपान्त्यस्याक्षरस्यलोपः *उत्तरेचतस्यामेव* उत्तरे च मान-वेएतस्यामेवमन्द्रायामा शुर्म्मंदालुप्तोपान्त्याभवति । उत्तरेमानवेयो-नौतृतीयपादोयान्त्यपर्वशुर्म्मंदा *अन्यत्रशुर्म्मंदायाः* उत्तरए-मानवेअन्यत्रमन्द्रयायाः सोमउष्मादिशुर्म्मंदायाः सामनुष्मादिशुर्म्मं-दायाः अलुप्तोपान्त्यालोपोन भवतीत्यर्थः । *पूर्वस्याउपान्त्यनीचं-न्यक्ष्वत्वाग्रीसाम्नाश्चदक्षसापतिः फवीं *वाच्यश्चेतामउष्मादिशुम-पश्रीत्वाग्रीसाम्निचपवत्वदक्षसाधनायांचदक्षसायोनिदृष्टा । ऊहगी-तौपतिः फवीमापद्यते । वाचमश्वयोद्वनोद्वितीयपादाद्वितीयपर्वं च द-क्षमाद्वा २ ते २ सा सा २ इति त्वाग्रीसाम्न्यपिद्वितीयपादाद्वितीयमत पर्वंचदक्षमा उ २ मा २ सा २ ता २ इति *रन्धोत्तरे-शुर्म्मंदोत्तरयोर्जातः पृछा* उत्तरेअरण्यारन्धतृतीयपादाद्यपर्वयो-नौशुर्मंदायाराग्निपिशाप्याउत्तरयोः स्तोत्रीययोः जातः पृछामा-पद्यते । आर्चुदरश्वेति त्रयो नयोर्विशेष इति उच्यते । शुर्म्मंदा-याः द्वितीयमक्षरमभिगीयते । जातः पृछापापद्यंभवतीति एव-विधेयः । पुनागोरत्वावेकाद्वितीयादेरानांऽशो इति ॥

इति अष्टमस्य षष्ठी कण्डिका समाप्ता ॥

श्येनेष्ठं वाजुहोतामयोनावुष्णिक्षु च कूलीये वैश्वमनसे राथीतमासख्य इन्द्रं वयंशीये गायन्त्यायामाछाहोतारव्यौ चतुरक्षरशः परयोस्त्र्यक्षरेछापञ्चाक्षरे होता द्व्यक्षरेऽन्यत्र सुज्ञानेनिधनमेकिनेस्वर वाचः साम्नि स्यात्सुत्तमायां तृतीयपादादौ यदक्षसोत्तष्ठियां

---

*श्येनेष्ठं वाजुहोताम्* गायत्र्यौशनेष्ठं वा योनिदृष्टा उत्तरादि आजुहोतामापद्यते मध्ये तृतीया भवति *अयोनौ* योनौ तु प्रतिषेधः । *उष्णिक्षु च कूलीये*रोहितकूलीये योनिदृष्टामेष्ठं वा इन्द्रगछायां आजुहोतामापद्यते । *वैश्वमनसे राथीतमासख्य इन्द्रा* वैश्वमनसे द्वितीयपादादौ राथीतमापवस्तादेवायां सख्य इन्द्रामापद्यते । एतयोः को विशेषः राथीतमायास्तृतीयमक्षरं नीचम् । राथी २ तमा २२ ऊ १ वा ३२ सख्य इन्द्रायास्तृतीयमुच्चं,सा १ ख्या इन्द्रो ३२ तथाहःस्तोम चतुर्थे एव विशेषः । *वयंशीये गायन्त्यायामाछाहोताख्यौ चतुरक्षरशः* । उद्वंशीये गायन्त्यायामाछाहोताख्यौ चतुरक्षरशौ भवतः । अग्नि वो वृधन्तायां प्रथमे अछाहोतारं वी । अग्निदूतायां विशेषार्थं चतुरक्षरश इत्युक्तम् । मन्त्राणन्त्वाया हो ३ अछाशतक्रा २३३ ता २ उहोता *परयोस्त्र्यक्षरेछापञ्चाक्षरे होता* गायत्र्युत्तरयोः अछा त्र्यक्षरा भवति । होता पञ्चाक्षरा भवति तदिन्द्राहो ३ अयं चेताना इति । *द्व्यक्षरेऽन्यत्र* आत्वाभिप्रवीयेदव सपतिसूत्रेण मोघाशप्रथमः । परिवायोगः सूर्येऽन्यत्र अनयोर्द्व्यक्षरे अछाहोतारव्यौ भवतः । विश्वा ३ हो १ इवा २३१ र्वा *सुज्ञाने निधनमेकिनेस्वरं* सुज्ञाने निधनाजथा एकिने स्वरं भवति । कानिक्रदद्एकारः प्लुतो भवतीत्यर्थः *वाचः साम्नि स्यात्सुत्त-

लौशयोः पूर्वेवारवन्तौ तु विशुष्मंस्तूत्तरेचतुर्थोर्थं द्वि-
तीयस्तुं ह्रस्वारूपयोश्च तथाशार्ङ्गेतृतीयोर्थं ध्रुवेवारवं-
तास्तितस्तृतीयेपादे द्वितीयेतूष्णिक्षु चतुरक्षरा प्रथ-

---

माया तृतीयपादादौ च दसतो तद्विषा* । वार्चः सांम्न योनि-
ष्ठा च दसमा स्यामुत्तमाया स्तोत्रीयायां तृतीयपादादौ उत-
द्विषामापद्यते राजा २ दा २ इवा ३ । *लौशयोः पूर्वे वारवन्ता
तु विशुष्मा *अत्र किं मातं ओमुनं चेदिति सन्निकर्षः विव-
क्षायां सन्निकृष्यत इति मापूर्वयोरिति सन्निकर्षः । ततो वारा-
पत्तिः सूत्रेण मोत्तारा प्रथमपारिषद् अत आह लौशयोः पूर्वे वा-
रवन्ता तु विशुष्मामापद्यत इति । *उत्तरे चतुर्थोर्थं द्वितीय*
स्वरमापद्यते । द्वितीयपादान्ते उपोत्तमं पदं चतुर्थोर्थं असा-
वि सोमगोविन्दवत्सयोः यदस्मो ३ऽम भिया अचिक्रदा ३ मा
इन्द्रो मुरनेत्रपिताः । *ह्रस्वारूपयोश्च* । ह्रस्वायां च पञ्चनिध-
नैवरूपान्तयोः द्वितीयपादादौ चतुर्थोर्थम् । शतं भूमिरुतस्यो १
या २ एतद्दगीतौ अभिसोमादिषु यथावोत्तरयोश्च द्वितीयं स्वर-
मापद्यते पञ्चतमादिषं एवं । *तथा शार्ङ्गे तृतीयोर्थम्* यथा
क्रौशादीनां चतुर्थोर्थस्य द्वितीयस्वरापत्तिः । एवं शार्ङ्गेऽपि द्रष्ट-
जनाया । *ध्रुवे वारवन्तास्तितस्तृतीये पादे* ध्रुवे वारवन्तायोनौ
पुनानः सोमाया निसोत्तारवन्ता आरत्नानिवस्त्वमसिद्धोपन्याता
त्रिंशपविवसथा । *द्वितीये तूष्णिक्षु* उष्णिक्षु गीयमानस्य
सप्ताय आनिषीदतायां वारवन्ता द्वितीयपादे भवन्ति । *चतु-
रक्षराः प्रथमा १ क्षरे परे* । योनिवत्सस्तोत्रा चतुरक्षरत्वे
माते विशेष उच्यते । चतुरक्षराः मघवापूजना २ नाया १ क्षरे

माघां भे प्रत्यये प्रथमोच्चान्त्यस्य वृद्धिकर्षिणापत्तिः कर्षीपंसाहीये शताद्द्वितीयपंसकर्षात् तथा सर्वत्र सन्न्यायो मन्द्रश्चतुर्थमयोना ऐङ्कौत्से च यत्तुरुचा-याभोयाद्यस्य लोपो वाशब्दे च नित्यमोत्वं क्षिते च हा-

---

द्विधा च योनिदृष्टा सापत्तिः कर्षीमापद्यते या २ अर्षां २२ ता २१ इति । *साहीये शताद्द्वितीयपंसंकर्षात्* । सत्रासाहीयं शताद्द्वितीयं स्वरमापन्ना सङ्कर्षात् कारणात् न्यंवायीशातविन्यवार्यं ३ वान्त । सिद्धोपन्यासो विशेषविवक्षया । *तथा सर्वत्रसन्न्यायः* यथाहि योनौ सङ्कर्षाद्द्वितीयस्वरापत्तिः एवं सर्वत्र गतायां द्वितीयस्वरापत्तिर्न्यायो वेदितव्यः । असङ्कर्षेऽपि ऊहगीतौ अ-भ्यनुज्ञायते । यत्र संकर्षो नास्ति । तत्र यथाप्रकृत्येव तृतीयादि-शतान् भवन्ति शता ३ का १२३२ वः ३ विदा २२ इंगा ३ ऊ ३ वा *मन्द्रश्चतुर्थमयोनौ* साहीयप्रत्र मन्द्रस्वरस्यो वर्णश्चतुर्थं स्वरमापद्यते ऊहगीतौ *ऐङ्कौत्से च* ऐङ्कौत्से अयंपूषादिषु मन्द्रस्वरस्य चतुर्थस्वरमापद्यते । *यत्तुरुचायायोऽयाद्यस्यलोपः* यसज्ञादि ऐङ्कौत्सग्रहणं इदानीं मन्त्रवर्णेऽभ्यनुज्ञायते यत्तुरुचायां सत्रा-साहीयेऽपि वा आद्यस्य वर्णस्य लोपः । इकारस्य लोप इत्यर्थः । तथा सति यत्तुरुचो दिव्या अभिर्व ३ वा ३ एतद्रूपं भवति प्रास्थिते उच्चारणमूर्तेण ऊपाने उच्यते । *वाशब्दे च नित्यमोत्वं* वा-शब्दे च प्रत्यये नित्यमोत्वं । तथा सति भिन्नशब्दस्य इकारे लोपे सति वाशब्दे प्रत्यये ओत्वं नित्यमापद्यते । यस्तू २ रुनो दिव्याः अभो वेति रूपं भवति । *क्षितेचहाशब्दे* । ऐ ३ च सैन्धुक्षिते हाशब्दे प्रत्यय असाम्यंयवसन्देहयोः पूर्वस्य स्वरस्य व्य-ञ्जनस्य च ओत्वं भवति । योनौ विसर्जनीयस्य अलोपदर्श-

न्दसे समन्तेदिवा नक्ता प्रथमं दान्त्यस्य वृद्धिर्विष्टारपङ्क्त्यां किमिश्रिवृहदेःमयोर्घृणी प्रथमं चेसोर्दैर्घे पराङ्गं नित्यमाचार्यनियमात् पूर्वाङ्गं च वृदेव च पूर्व-

---

वृशानऊधः पाहिविश्वस्मात् । इमं॰स्तोमांमाति च दिवानक्ता प्रथमं स्वरमापद्यते । योनौ द्वितीयं पर्व दिवानक्तात्वं होतानोऽपरा हे.एतेषु त्रिषु प्रथमं स्वरमापद्यते । *दान्त्यस्य वृद्धिर्विष्टारपङ्क्त्यां* पर्वमध्यवत्र्ययोनिवत् वृद्धिरुच्यते । पर्वमध्यपादान्तां वृद्धिवचनादिमं॰स्तोमं समन्ते पादादिकपर्वमस्तावोन योनिवदष्टाक्षरः मस्तावो भवति । *किमिश्रिकवृहद्वामदेव्ययोः घृणीप्रथमं *स्वरमापद्यते किमित्यायां वहति त्रिकद्रुकायां पञ्चनिधनवामदेव्ये वृहतोः प्रथमं स्वरं । *चेसोर्दैर्घे पराङ्गं नित्यमाचार्यनियमात्* । चेसोमायां दैर्घे श्रवसे पराङ्गं नित्यमलोपो भवति । गकारस्व किमुक्तं भवति । वृहदोहेसेतस्मिन्नपि कल्पे कथं तु गकारेणास्य प्रस्तारम्भ इति । अन्यथाद्वदोहेत्वेतस्मिन्नपि कल्पे दकारेणास्य प्रत्यारम्भः स्यात् । कस्मादेवमेव भवति । उच्यते आचार्यनियमात् । ऊहगशादिसर्वः । ऊहकारोहि द्वयोरपि कल्पयोरनुपङ्गं गकारेण प्रत्यारम्भं कुर्वन् उभयत्र गकारो भवति । इतरथा पूर्वेषुभयं मानेवेति तस्मादुभयत्र गकारेण प्रत्यारम्भ इति सिद्धम् । *पूर्वाङ्गं च* चशब्दात्पूर्वाङ्गं च नित्यमलोपितं भवति। अत्र कथं प्राप्नोति । अन्तःपदिकानां व्यञ्जनानां स्तोमान्ते विरते लोपो भवतीति । सन्धौ यत्र उभयोरपि पूर्वाङ्गपराङ्गयोः सं॰हितायामीहारो भवति । यथा हाविष्कृते त्वंसुतोमदाहाउन्ताः इतिपूर्वाङ्गं भवति यदान्वीयानां जनानां माकृस्तोभभावो भव

ङ्गुंप्राणा सर्वासु मनाउयेन्नुमूतयावायोरनीमुत्तरयो र्यज्ञामहामित्रोत्तरयोश्चतुरक्षरायां विधायां वाजीया जापिवासोमो मुत्तरे जनित्रे पुरोजित्यामुदुगीथाय स्य दीर्घत्वं दन्वते प्रथमऋध्ययमिनामुत्तरयां वार्त्र तुरे गीथाधं प्रथमोच मागायतां द्वितीये च पादे सा-

---

यन्हिधया ३ अग्नीसोमोत्तमायां अभिद्रोणाउग्रंष्ंसम्नांताप- यते । अस्यप्रथमो । *ताद्विरिङ्का माणासर्वासु* । मागातृचे सर्वासु स्तोभीयासु अभिद्रोणातद्विविद्धामापद्यते । हिन्त्रजितश्चेदि- षु । *मनाउयेन्नुमुतयावायोरनीमुत्तरयोः* गौतमस्य मनाउयेन्नु- मूतायां योनिद्दष्टा कणे ३१ पुनू ५२ इति उत्तरयोर्वायो- रनीमापद्यते रा २ ध्ये २ देयायउयेद्भन्दधिष्ठेति । *यज्ञामहामि- त्रोत्तरयोश्चतुरक्षरायां विधायां वाजीराजापिवासोमयां । *यज्ञा यज्ञीयर्क्षु महांविश्वामित्र उत्तरयोः स्तोत्रीययोश्चतुरक्षरयोर्वै- ङ्कतायांवाजीराजापिवासोमामापद्यते । प्राह्मणादिन्द्रराधसऊर्जः ना ३ पानं सहिना ३ सुनव वा ३ वाजीवाकस्तामिद्रोतिवाजी- याना २ *उत्तरे जनित्रे पुरोजित्याउद्गीथायस्यदीर्घत्वम* । *उत्तरे जनित्रे पुरोजित्युत्तमायां उद्गीथायस्य ह्रस्वस्याक्षरस्य दीर्घत्वं । पा २ मा ३ इति । *दन्वते प्रथमे ऋध्यय मि- यामुत्तरयोः* वैदन्वते प्रथमे समाप्तोत्तरऋध्या योनिद्दष्टा- उत्तरयोः स्तोत्रीययोः इत्यभिचापापत्रने अग्रेरपयाद्वितीयऋ- ५५ । *वार्त्रतुर गीथाय प्रथमोचं मागायतां* वार्त्रतुरे उ- द्गीथाय प्रथमोचमायन्ददिप्रराणा मतादित्यर्थांपद मठनं प्रथ- मोचे स९ंहन्यत इति गर्वापेतेति । उदाहरणग्रहणात् । मागाय- तामापद्यते । पादरा यात्रुणत्रस्योविक्षेपः । द्वितीये च पादे सात्वा-

ऊशांसिषंतस्तुपश्चेत्यनुब्राह्मणंस्वाध्याये देवतानामधेयान्यथ निरुक्तेष्वेके यथादेशं च कालविनामपि प्रवचनविहितः स्वरः स्वाध्याये तथा शाख्यायनिनांसमानोदर्कपूदर्कस्योद्धारः पूर्वयोः स्तोत्रीययोर्मेद्दनाया तूपान्त्यं पदं प्रतिस्तोत्रीयं वाजीये

दीनितस्तुपांतानि अनुब्राह्मणंस्वाध्याये ऊहगीतावित्यर्थः । *देवतानामधेयान्यथ निरुक्तेष्वेके* देवतापरीक्षनामधेयानि स्वाध्याये ऊहे एके तथैवोहे यथा राणायनीयाः । पुनानइन्द्रायारयेति वाहिदुवधनधा सके मियंयज्ञायेति । *यथादेशं च* यच ब्राह्मणमनु शब्दः सूत्रकारैरादिश्यते तच ऊहगीतौ तथैव भवति द्विपदमभ्यस्यन्ति । नोधसस्य पदूककुभ इति मध्यमां तृचस्य प्रकृतिं कृत्वेति रथन्तरादीनां ककुबुत्तरं ककुबुत्तरे नौधसे द्विपदमभ्यस्यन्ति आ २३३ इन्द्रगी २ र्गिनवा ३ मा ३ हा २ १ १ । उत्तमायामप्येवम् । *कालविनामपि प्रवचनविहित स्वरः स्वाध्याये* कालविनामपि प्रवचनविहितः स्वरः । प्रवचनशब्देन ब्राह्मणमुच्यते । प्रोच्यत इति प्रवचनम् । स्वाध्यायशब्दः पूर्ववत् । *तथा शाख्यायनिनाम् *तथा शाख्यायनिनामपि प्रवचनविहितः स्वरः स्वाध्याये । शाख्यब्राह्मणादिब्राह्मणविहितः स्वरः स्वाध्याये ऊहगाने स्वाध्यायशब्दे च ऊहगानमुच्यते । *समानोदर्कपूदर्कस्योद्धारः पूर्वयोः स्तोत्रीययोः* । समानमुदर्कं येषु तानि समानोदर्काणि तेषु समानोदर्केषु उदर्कशब्दोऽन्तरवचनः । समानं समाप्तिषु । अन्त्यस्योद्धारः यथा परिस्वानाया मदेषु सर्वथा अशीति तथा च पकाः मैककुभे चतुरक्षरस्योद्धारः पादवदृचः । उ-

नि च पर्वाङ्गभूतानि च तथा ह्लायिकारस्वारपदानुस्वराणामन्तः सामिकानि च स्तौभिकानि सामान्तिकानि सामान्ते सर्वत्राऽन्यत्रगणगीतिभ्यः प्रतिस्तोत्रीयं वोधीयधुरामहत्वयोः कण्वबृहति च निधनोपायान्ताः स्तोत्री-

---

यति यथा पदनिधने काण्वे बृहन्निधने वार्कजम्भे । *पर्वाङ्गभूतानि च *प्रतिस्तोत्रीयं भवन्ति । *तथा ह्लायिकारस्वारपदानुस्वाराणां* ह्लायिकारस्वारपदानुस्वाराणां प्रतिस्तोत्रीयं ह्लायिकारो भवति । पदानुस्वाराणां, स्वारग्रहणाच्च वाङ्निधनानां प्रतिस्तोत्रीयं निधनानामभावः यथा उद्वज्ञार्गेने सामराजेअन्ताविसोमायां अत्र स्तोभाङ्गभूतोऽपि प्रतिस्तोत्रीयं निधनं च भवति । उभयमपि भवति । *अन्तःसामिकानि च स्तौभिकानि* । अन्तःसाम्नि च साममध्ये यानि स्तोत्रीयं भवन्ति यथा स्व.पृष्ठोत्सेधादिषु । *सामान्तिकानि सामान्ते सर्वत्र* यानि स्तौभिकानि निधनानि बर्हिर्निधनानि तानि तृचस्य साम्नः अन्ते भवन्ति यथा आमहीयवरौरवश्यैतादिषु *अन्यत्र गणगीतिभ्यः* । गणगीतिषु तु बर्हिर्निधनेषु पारयन्तीयादिषु यज्ञायज्ञेषु तन्तेश्रुधीहवादिषु । तथा एनावत्स्विडमाडवादिषु । तथा वैराजर्षभमहारयोः पिवासोमादिषु एतेषु सामसु अन्त्य बर्हिर्निधनानि भवन्ति । *प्रतिस्तोत्रीयं वोधीयधुरामहत्वयोः* सामान्तिकानि सामान्ते सर्वत्रेति प्राप्ते इदमुच्यते । प्रतिस्तोत्रीयं निधनं भवति स्वाशिषादिषु *कण्वबृहति च *प्रतिस्तोत्रीयं निधनं भवति स्वाविष्यादिषु* निधनोपायान्ताः स्तोत्रीयाः सर्वत्र* बर्हिर्निधनेष्वेवामहीयवनौधसश्यैतादिषु सामान्ते सच्चमासौ सामान्तिकत्वात् । किन्तु उपायार्थमुच्यते निधनोपायान्ताश्चिउपायः प्रतिस्तोत्रीयं भवतीत्यर्थः उपायोपक्रमणि ।

